# भूमिका ।

छन्दः शास्त्रं वेदस्य प्रथमाङ्गम् । तस्यायं मुख्यतमो ग्रन्थः । अस्य निर्माता पिङ्गलाचार्यः पिङ्गलमुनिः पिङ्गलनाग रित्याख्याभ्यामपि प्रसिद्धः । पतञ्जलिरेवाय मिति केचित् । अस्यास्मिन्नेव ग्रन्थे वैदिक लौकिक च्छन्दांसि बाभान्ति । अस्मिन्नष्टावध्यायाः सन्ति । तत्र प्रथमेसंज्ञाप्रकरणम् । द्वितीये गायत्र्यादि वैदिकच्छन्दसा (५६) मुपभेदाः । तृतीये पादव्यवस्थयागायत्र्यादि वै० सप्त च्छन्दसामावान्तरभेदाः । उपसंहारोक्तप्राचीनपङ्क्तितो ऽन्त्ये ऽत्र त्रीणि सूत्राणि न दृश्यन्ते । चतुर्थे वैदिकच्छन्दसां नामान्यक्षर सङ्ख्यया समाप्यार्या वैतालीयादि लौकिकं मात्रा छन्दसां कथनम् । अत्र सप्तम सूत्रस्य योग विभागः (४१ सू०त्पूर्व ) षट् सूत्रस्याऽदृश्यता च वर्तते । पञ्चमे विषमार्द्ध समवृत्त कथनम् । अत्रैकस्यानुपलब्धिः । षष्ठे षडक्षर पादमारभ्य द्वादशाक्षर पादच्छन्दसामुक्तिः अत्र षट् सूत्राणि प्रक्षिप्तानि । सप्तमे त्रयोदशाक्षरमारभ्या वशिष्टानांकथनम् । अष्टमेगाथोक्तिपूर्वकं प्रस्तारादि प्रत्यय विस्तारः । अत्र द्वितीयाद्यष्टादश सूत्राणि प्रक्षिप्तानि । अन्तिम मनुपलब्धम् । अस्य मनोरमा नाम्नीयं टीका प्रिय मित्रगणकमातृप्रसादस्य प्रोत्साहनेन निर्मिता विद्वत्कर-स्पर्शेन पता भवेदिति निवेदको ।

राधाकान्त पाण्डेयः ।

ॐ

* श्रीगणेशाय नमः *

# अथ पिङ्गल छन्दः सूत्रम् ।

## ॥ तत्र प्रथमोऽध्यायः ॥



धीश्रीस्त्रीम्[1] । वरासाय्[2] । का गुहार्[3] । वसुधास्[4] । सातेक्वत्[5] । कदासज्[6] । किंवदम्[7] । नहसन्[8] । गृल्[9] ।

शेषभूषं शिवं नत्वा छन्दः सूत्रार्थकामिने ।
मनोरमा नाम सूक्ष्मा टीकेयं क्रियते मया ॥१॥

(१-८) अष्टमूर्तैरिवाष्ट्यासानष्टौगणान्त्रिदिशत्यादौ लघुगुरुत्रिकोपादानोदाहरणपूर्वकम् । सर्वगुरोस्त्रिकस्यम्संज्ञेत्यर्थः । तेषां देवताफलानि मम छन्दः शिरोमणौ--भूर्वारग्निर्मरुद्व्योमेन्दः ग्लौर्नागोमतः सुराः। फलानि श्रीर्वृद्धिरन्तोयात्रानश्रुग्यशःसुखम् ॥१॥ मगणसूचकोऽयं मकारः तस्यफलं विद्युन्मालादिषु । एवंद्वितीयादिसूत्रेषु यगणादिसंज्ञा ज्ञेया ।

(९) गृग्रहणेन ह्रस्वैकाक्षर ग्रहणम्-लकारश्च लघुबोधार्थः । नामैकदेशेनामग्रहणमितिन्यायात् ।

गन्ते[१०]। ध्रादि परः[११]। हे[१२]। लौसः[१३]। ग्लौ[१४]। अष्टौ वसव इति[१५]। इति प्रथमोऽध्यायः ॥

(१०) पूर्वेण ग्–अनुवर्तते। गकारश्च गुरुबोधकस्तेन पादान्तस्थस्य ह्रस्वाक्षरस्य वा गुरुसंज्ञेत्यर्थः।

(११) ध्र–इति व्यञ्जनसंयोगस्योपलक्षणम्। ध्र–आदिर्येषान्ते परे यस्मात् सध्रादि परः। आदिपदेन विसर्जनायादीनामपि गुरुसंज्ञेत्यर्थः।

(१२) हे–इति द्विमात्रोपलक्षणार्थम्। ग–इत्यनुवर्तते। तेन द्विमात्रस्य दीर्घाक्षरस्य गुरुसंज्ञेत्यर्थः।

(१३) गकारपरामर्शकस्तच्छब्दः। सगकारः मात्रागणनायां द्विमात्रः द्वौ लघू कृत्वा गणनीयः।

(१४) आशास्त्रपरिसमाप्तेरधिकारोऽस्य।

(१५) लोकप्रसिद्ध्युपलक्षणार्थमिदं सूत्रम्।

इति शब्दोऽध्यायसमाप्तिसूचकः सर्वत्र।

## वैदिक छन्दःस्पष्टीकरण चक्रम् ।

| छन्दांसि | गा. | उ. | अ. | बृ. | पं. | त्रि. | ज. | उदाहःसू.अं. |
|---|---|---|---|---|---|---|---|---|
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ | २ / ३-१२ |
| आसु० | १५ | १४ | १३ | १२ | ११ | १० | ९ | २ / ४-१३ |
| प्राजा० | ८ | १२ | १६ | २० | २४ | २८ | ३२ | २ / ५-११ |
| याजु० | ६ | ७ | ८ | ९ | १० | ११ | १२ | २ / ६-१२ |
| साम्नाम् | १२ | १४ | १६ | १८ | २० | २२ | २४ | २ / ७-९ |
| ऋचाम् | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | २ / ८-१० |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ | २ / १५ |
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | २ / १६ |

# अथ द्वितीयोऽध्यायः ।

छन्दः[१] । गायत्री[२] । दैव्येकम्[३] । आसुरी पञ्चदश[४] । प्राजापत्याऽष्टौ[५] । यजुषां षट्[६] ।

(१) आशास्त्रपरिसमाप्तेरधिकारः । छन्दः शब्देनात्रसंख्यावच्छन्दो गृह्यते ।

(२) आद्वादशसूत्रपरिसमाप्तेरधिकारः ।

(३) गायत्र्यधिकारे दैवीत्येकाक्षरं छन्दः ।

साम्नां द्विः[७] ऋचां त्रिः[८] द्वौद्वौ साम्नां-वर्द्धेत[९]। त्रींस्त्रीनृचाम्[१०]। चतुरश्चतुरः प्राजापत्यायाः[११]। एकैकं शेषे[१२]। जह्यादासुरी[१३]। तान्युष्णिगनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगत्यः[१४]।

(७) षड्त्यनुवर्त्तते तेन द्विगुणिता षट् संख्या चेत् साम्नां गायत्री भवति।

(८) पूर्ववदत्रापिषडनुवृत्तिः क्रियाभ्यावृत्तिश्च।

(९) गायत्रीत्यनुवर्त्तते। साम्नांपङ्क्तौ द्वौद्वौ संख्याङ्कौ गृहीत्वा गायत्री वर्द्धेत। अग्रे त्रिषु सूत्रेषु वर्द्धेतेत्यस्य संबन्धः कर्त्तव्यः।

(१२) शेषशब्देन दैवी याजुषी च गृह्यते। यत्र गायत्र्यां संख्या वृद्धिर्नास्ति तत्रैकैकमङ्कं गृहीत्वावर्द्धेतेत्यर्थः। तथैव याजुषी।

(१३) एकैकमित्यनुवर्त्तते। तेन, आसुरी नाम गायत्रीत्यजेदेकैकमक्षरम्।

(१४) तानीति छन्दांसि गायत्र्याः परस्ताद् भवन्ति।

त्रिस्त्रस्तिस्त्रः समानान्यएकैका ब्राह्मयः [१५]। प्राग्यजुषामार्ष्य इति [१६]। इति द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

पादः [१]। इयादिपूरणः [२]। गायत्र्या वसवः [३]।

(१५) याजुषी-साम्नी-आर्ची चेतितिस्त्रः गायत्र्यः मिलितैकाषट्त्रिंशदक्षरा ब्राह्मी नाम गायत्रीस्यात् तिस्त्रःतिस्त्र इति द्विरुक्त्योष्णिगादीनां ग्रहणम्। तथैकैकेतिवीप्सया ता एव ब्राह्म्यो भवन्तीति विधीयते ब्राह्म्य इति विशेषणं जगती पर्यन्तानां गायत्र्यादीनामिति ।

(१६) तिस्त्रः तिस्त्र इत्यनुवर्तते । यजुषां पङ्क्तेः प्राक् प्राजापत्या-आसुरी-दैवीतियास्तिस्त्रो गायत्र्यस्ताः संगताः सत्यश्चतुर्विंशत्यक्षरैकार्षी गायत्रीभवतीत्यर्थः। एवमुष्णिगादिषु ।

(१) अध्याय परिसमाप्तेरधिकारः ।

(२) इत्यादिः पूरणः यस्यसः। आदिनोवादयः। यथा—त्रियम्बकम् ।

(३) परिभाषेयम् । अग्रेऽपित्रीणिसूत्राणि ।

जगत्या आदित्याः[४]। विराजोदिशः[५]। त्रिष्टुभोरुद्राः[६]। एकद्वित्रिचतुष्पादुक्तपादम्[७]। आद्यं चतुष्पाद्दतुभिः[८]। क्वचित् त्रिपाद्दषिभिः[९]। सा पादनिवृत्[१०]। षट्कसप्तकयोर्मध्येऽष्टावतिपादानिवृत्[११]। द्वौ नवकौ षट्कश्च सा नागी[१२]। विपरीता वाराही[१३]। षट्कसप्तकाष्टकैर्वर्द्धमाना[१४]।

( ७ ) उक्तः पादः यस्य तत्। चतुर्भिर्लक्षणैः।

( ८ ) षडक्षरैः पादैश्चतुष्पाद् गायत्र्यमाद्यं छन्दो भवति। एवं चतुर्विंशत्यक्षराणि भवन्ति।

( १० ) सैव गायत्री पादनिवृदिति संज्ञां भजते। यथोक्तुरदृष्टाभ्युदयसूचिकेयं संज्ञा।

( ११ ) प्रथमेषड् द्वितीयेऽष्टौ तृतीयेपादे सप्तैवं पादैस्सातिपादनिवृत्। त्रिपादित्यनुवर्तते।

( १२ ) तृतीयश्च पादः षडक्षरः त्रिपात्सा नागी।

( १३ ) प्रथमःपादः षडक्षरः द्वितीय तृतीयौ नवाक्षरौ। सागायत्रीनागी-वाराही-नाम।

( १४ ) एभिःपादैःक्रमेण वर्द्धमाना नाम।

विपरीता प्रतिष्ठा[15]। तृतीयं द्विपाज्जागतगायत्राभ्याम्[16]। त्रिपात् त्रैष्टुभैः[17]। इति गायत्र्यधिकारः॥ उष्णिग् गायत्रौ जागतश्च[18]। ककुम्मध्ये चेदन्त्यः[19]। पुर उष्णिक् पुरतः[20]। परोष्णिक् परः[21]। चतुष्पाद्दृषिभिः[22]। इत्युष्णिगाधिकारः॥ अनुष्टुब् गायत्रैः[23]। त्रिपात् क्वचिज्जागताभ्याञ्च[24]।

(१६) तृतीय शब्देन विराजग्रहणम् ।

(१७) तृतीयमित्यनुवर्तते ।

(१८) अविवक्षितश्चात्रक्रमः ।

(१९) गायत्रयोः पादयोर्मध्ये जागतः पादस्तदा सोष्णिक्ककुप् नाम ।

(२०) पुरतोजागतश्च सा पुरउष्णिङ्नाम ।

(२१) पूर्वौ च गायत्रौ परोजागतः पादस्तदा परोष्णिङ् नाम ।

(२२) समाक्षरैश्चतुर्भिः पादैरुष्णिगेवास्ति ।

(२३) चतुष्पादित्यनुवर्तते । अष्टाक्षरैश्चतुष्पाच्छन्दोऽनुष्टुप्स्यात् ।

(२४) वचन विपरिणामेन पूर्वसूत्रमनुवर्तते तेन प्रथमेऽष्टाक्षरः स्यात् ।

मध्येऽन्ते च[२५]। इत्यनुष्टुबाधिकारः॥ बृहती जागतस्त्रयश्च गायत्राः[२६]। पथ्यापूर्वश्चेत्तृतीयः[२७]। न्यङ्कुसारिणी द्वितीयः[२८]। स्कन्धोग्रीवी क्रौष्टुकेः[२९]। उरोबृहती यास्कस्य[३०]। उपरिष्टाद् बृहत्यन्ते[३१]। पुरस्ताद्बृहती पुरः[३२]। क्वचिन्नवकाश्चत्वारः[३३]।

(२५) जागतयोःपादयोर्मध्येऽन्ते च यदा गायत्रः पादः तदाप्यनुष्टुबेव। इत्यनुबधिकारः॥

(२६) प्रथमे जागतः पादस्त्रयश्चाष्टाक्षरः।

(२७) बृहतीत्यनुवर्तते।

(२८) पूर्वश्चेदित्यनुवर्तते।

(२९) इयमेवन्यङ्कुसारिणी स्कन्धोग्रीवी नाम।

(३०) इयमेव न्यङ्कुसारिणी–उरोबृहती। ऋषि नाम ग्रहणं पूजार्थम्।

(३१) अन्तेजागतः पादः शेषाश्चगायत्रास्तदोपरिष्टाद्बृहती नाम।

(३२) जागतः पादः पूर्वश्चेत्तदा पुरस्ताद्बृहती नामछन्दः।

(३३) नवाक्षराश्चत्वारः पादाः क्वचित् वेदे सापि बृहती नाम।

वैराजौ गायत्रौ च[३४]। त्रिभिर्जागतै-
र्महाबृहती[३५]। सतो बृहती ताण्डिनः[३६]। इति
बृहत्याधिकारः॥पङ्क्तिर्जागतौ गायत्रौ च[३७]।
युजौ चेदयुजौ सतःपङ्क्तिः[३८]।विपरीतौ च[३९]।
आस्तारपङ्क्तिः परतः[४०]। प्रस्तारपङ्क्तिः
पुरतः[४१]। विष्टारपङ्क्तिरन्तः[४२]।

(३४) पूर्वौ द्वादशाक्षरौ ततोऽष्टाक्षरौ च पादौ सापि बृहती नाम छन्दः।

(३६) महाबृहत्याः नामान्तरं सतोबृहती ताण्डीमतेन। इति।

(३८) प्रथमतृतीयौ, जागतौ द्वितीय चतुर्थौ च गायत्रौ पादौ तदा सतःपङ्क्तिर्नाम।

(३९) प्रथम तृतीयौ गायत्रौ द्वितीय चतुर्थौ च जागतौ तदा सतः पङ्क्तिरेवेत्यर्थः।

(४०) परौ जागतौ पूर्वौ गायत्रौ तदा आस्तार पङ्क्तिर्नाम।

(४२) अन्तर्मध्ये जागतावाद्यन्तौ च गायत्रौ पादौ, विष्टार पङ्क्तिः।

संस्तारपङ्क्तिर्बहिः[४३] । अक्षरपङ्क्तिः पञ्चकाश्चत्वारः[४४] । द्वावप्यल्पशः[४५] । पदपङ्क्तिः पञ्च[४६] । चतुष्कषट्कौ त्रयश्च[४७] । पथ्या पञ्चभिर्गायत्रैः[४८] इति पङ्क्त्यधिकारः॥ जगती षड्भिः[४९] । एकेन त्रिष्टुब्ज्योतिष्मती[५०] ।

(४३) बहिर्जागतौ मध्ये च गायत्री तदा संस्तार पङ्क्तिः ।

(४४) पञ्चकाक्षराश्चत्वारः पादा "अक्षर पङ्क्तिर्नामछन्दः" ।

(४६) पञ्चका इत्यनुवर्तते तेन पञ्चकाक्षराः पञ्च पादा "पदपङ्क्तिः" ।

(४७) प्रथम द्वितीयौ चतुष्कषट्कौ त्रयश्च पञ्चाक्षरा पङ्क्तिरेव । इदमपि पञ्चपाच्छन्दः ।

(४८) त्रयोदशाक्षरैः पथ्यानाम पङ्क्तिरिति ।

(४९) गायत्रैरित्यनुवर्तते । तेन गायत्रैः षड्भिः पादैर्जगती ।

(५०) एकेन त्रैष्टुभेन चतुर्भिर्गायत्रैः पञ्चपात्त्रिष्टुब् ज्योतिष्मती नाम । पूर्वत्र (४८) गायत्रपदस्य प्रस्तुतत्वात्प्रत्यासत्ति न्यायेन संबन्धः कर्तव्यः।

तथा जगती[५१] । पुरस्ताज्ज्योतिः प्रथमेन[५२] । मध्येज्योतिर्मध्यमेन[५३] । उपरिष्टाज्ज्योतिरन्तेन[५४] । एकस्मिन् पञ्चके छन्दः शङ्कुमती[५५] ।

(५१) एकेन जागतेन चतुर्भिर्गायत्रैः पञ्चपाज्जगती ज्योतिष्मती ।

(५२) आद्येन त्रैष्टुभेन शेषैर्गायत्रैः पुरस्ताज्ज्योतिर्नाम त्रिष्टुप् । जगतीत्यनुवर्तनेन चाद्येन जागतेन चतुर्भिश्चगायत्रैः पुरस्ताज्ज्योतिर्नाम जगती छन्दः ।

(५३) मध्यमश्चेत्त्रैष्टुभः—उभयतश्च द्वौ द्वौ गायत्रौ "मध्येज्योतिः । पूर्ववदनुवर्तनेन मध्यमो-जागतस्तदा" मध्येज्योतिर्नामजगती ।

(५४) पूर्ववदत्रापि-अन्त्येन त्रैष्टुभेन जागतेन च छन्दसी, उपरिष्टाज्ज्योतिरिति नामनी स्याताम् ।

(५५) एकः पादः पञ्चाक्षरस्त्रयश्च द्वादशाक्षराः शङ्कुमतीनाम छन्दः पुनर्ग्रहणं छन्दोनामनिवृत्त्यर्थम् ।

षट्के ककुम्मती[५६]। त्रिपादाणिष्ठमध्या पिपीलिकमध्या[५७]। विपरीता यवमध्या[५८]। ऊनाधिकेनैकेन निवृद्भुरिजौ[५९]। द्वाभ्यां विराट्स्वराजौ[६०]। आदितः सन्दिग्धे[६१]।

(५६) एकस्मिन् षडक्षरेऽन्येषु पूर्वोक्तेषु ककुम्मती नामछन्दः।

(५७) आद्यन्तौ विशेषाक्षरौ पादौ मध्यमोऽणिष्ठोऽल्पाक्षरः त्रिपात्सा पिपीलिकमध्याछन्दः।

(५८) आद्यन्तावल्पाक्षरा विपर्ययः। एवमुष्णिगादिष्वपि।

(५९) चतुर्विंशत्यक्षरा गायत्री न्यूनेनैकाक्षरेण "निवृद्" अधिकेन भूरिगिति संज्ञां भजते। उष्णिगादिष्वप्येवम्।

(६०) ऊनाधिकमनुवर्तते। तेन द्वाभ्यामक्षराभ्यामूनाधिकाभ्यां यथाक्रमं गायत्री "विराट् स्वराट्" संज्ञा स्यात्।

(६१) स्वराड् गायत्री किंवा विराडुष्णिगिति सन्देहे प्रथमेन पादेन निर्णयः कर्तव्यः। एवं सर्वत्र।

देवतादितश्च[६२]। अग्निः सविता सोमोवृहस्पतिर्वरुणइन्द्रोविश्वेदेवाः[६३]। स्व-राःषड्जादयः[६४]। सित--सारङ्ग-पिसङ्ग-कृष्ण नील-लोहित-गौरा वर्णाः[६५]। आग्निवेश्य काश्यप-गौतमाङ्गिरस-भार्गव--कौशिक-वाशि-ष्ठानि गोत्राणि इति[६६]। इति तृतीयोऽध्यायः॥

(६२) देवतादेरपि निर्णयः कार्य्यः। आदित्य-इयं स्वरादिग्रहणार्थम्।

(६३) गायत्र्यादीनां जगतीपर्य्यन्तानामग्न्या-दयो देवा यथाक्रमं निर्णयितारः। इदं वैदिकेष्वेव।

(६४) निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरः।

(६५) गायत्र्यादिषु क्रमेणैते वर्णाः स्युः।

(६६) एतानि क्रमेण गायत्र्यादीनां गोत्राणि।

## अथ चतुर्थोऽध्यायः ॥

चतुःशतमुत्कृतिः[१] । चतुरश्चतुरस्त्यजेदुत्कृतेः[२] । तान्यभिसंव्याप्रेभ्यः कृतिः[३] । प्रकृत्या च[४]। धृत्यष्टि-शर्करी जगत्यः[५]। पृथक्-पृथक् पूर्वत एतान्येवैषाम्[६] ।

(१) यत्राक्षराणां संख्या चतुरधिकं शतं तदुत्कृतिर्नाम ।

(२) उत्कृतेरारभ्य (अष्टचत्वारिंशदक्षरान्तं) चतुरश्चतुरःसंख्याकानक्षरान् क्रमशः त्यजेत् ।

(३) तान्युत्कृतेर्न्यूनानि छन्दांसि-अभि-सं-वि-आङ्-प्र-इत्युपसर्गेभ्यः पराणि कृति संज्ञानि स्युः । यथाशताक्षरसंख्याकमभिकृतिरित्यादिः ।

(४) निरुपसर्गः कृतिशब्दः प्रकृत्यायुक्तः स्यात्। यथाशीत्यक्षरं छन्दः कृतिः ।

(५) कृतेरनन्तरं-धृति–अष्टि–शर्करी–जगती एताः स्युः ।

(६) "एषां"पूर्वोक्तानां धृत्यादीनाम् "पूर्वतः पृथकपृथक् एतान्येव" शब्दस्वरूपाणि स्युः । यथा धृतिपूर्वं धृतिशब्दः ।

द्वितीयं द्वितीयमातितः[७]। अत्र लौकिकम्[८]।
आत्रैष्टुभाच्च यदार्षम्[९]। पादश्चतुर्भागः[१०]।

(७) द्वितीयं द्वितीयं शब्दस्वरूपमतिशब्दात् परतः स्यात्। यथा धृतिरतिधृतिः। तत्र षट् सप्तत्यक्षरमतिधृतिः। द्वासप्तत्यक्षरं धृतिरित्यादिः। इति सप्तसूत्रेणैतदुक्तं भवति-यथैकाक्षरादारभ्याष्टचत्वारिंशदक्षरपर्यन्तं वैदिकछन्दसां पादव्यवस्था अथाचैतेषां लौकिकाध्यायोक्तत्वाल्लोकेऽपि तथैव स्यादिति।

(८) आशास्त्रपरिसमाप्तेरधिकारः। अत्र वैदिक छन्दसां प्रस्तावे लौकिकान्याह। तेनार्यादीनां चूलिकान्तानां लौकिकत्वमेव।

(९) गायत्र्यादित्रिष्टुप् पर्यन्तंयद्वैदिकमुक्तं-तल्लोकेऽपि छन्दः स्यात्। अर्थात् षडक्षरादारभ्य-चतुश्चत्वारिंशदक्षरान्तं लौकिकमपि छन्दोजातं तथैव भवतीति। पुनर्लौकिके प्रकरण "उक्तादीनां" छन्दसांस्वेकाक्षरं दैवीगायत्र्यं वीक्ष्य कल्पना केदारादीनामाचार्य्याणामितिशम्॥

(१०) समवृत्तविषयमेतत्।

**यथावृत्तसमाप्तिर्वा[11] लः समुद्रा गणः[12]। गौ गन्तमध्यादिर्न्लौश्च[13]। अथार्याधिकारः। स्वरा अर्द्धञ्चार्यार्द्धम्[14]।**

(११) यस्य वृत्तस्य यादृशाः न्यूना अधिका वरावा तस्य तादृशाः पादा ग्राह्याः। विषमवृत्तार्थमेतत्। अस्मिन् सूत्रे त्रिप्रकारकं छन्दउक्तं केनचित्तन्नमात्राछन्दसि गणच्छसोप्यन्तर्भावात्। अतएव वृत्तरत्नाकरे "मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते।

(१२) ल इत्येकमात्रिकोपलक्षणम्। अतः प्रभृति चतुर्णां लकाराणामेकोगणः।

(१३) विस्पष्टार्थमिदं गणविन्यासभेदकं सूत्रम् द्वन्द्वं कृत्वा बहुव्रीहिः। गकारस्य प्रत्येकं संबन्धः। १ द्वौ गकारौ (ऽऽ) चत्वारोलघवः। २ गान्तः (।।ऽ)। ३ गमध्यः (।ऽ।)। ४ गादिः (ऽ।।) ५ नकारलकारौ मिलितौ चत्वारोलघवः (।।।।)।

(१४) पूर्वेण "गण" इत्यनुवर्तते। स्वरा इति सप्तानां संज्ञा। यत्र सप्तगणा अर्द्धञ्च तदार्य्यायाः

अत्रायुङ् न ज्[15] । षष्ठोज्[16] । न्लौ वा[17] । न्लौ चेत् पदं द्वितीयादि[18] । सप्तमः प्रथमादिः[19] । अन्त्ये पञ्चमः[20] । षष्ठश्च ल्[21] ।

अर्द्धम् । अर्धगण स्थाने गुरुरेकः कार्यो न लद्वय-मिति सम्प्रदायः । अर्धग्रहणेनाप्यर्यायाभावान्तरपा-दव्यवस्था नसिद्धा ।

(१५) अत्र प्रथमतृतीयपञ्चमसप्तमइति "अयु-ग्गणः" जगणो न स्यात् ।

(१६) षष्ठस्तु जगणः स्यादेव ।

(१७) षष्ठ इत्यनुवर्तते । षष्ठः गणः (।।।।) सर्व-लघुर्वा स्यात्

(१८) चेत् षष्ठः गणः सर्वलघुस्तदा द्वितीया-क्षरादारभ्य पदं स्यात् ।

(१९) न्लौ चेत्पदमिति शब्दत्रयमनुवर्तते । चेत्सप्तमोगणः सर्वलघुस्तदाप्रथमाक्षरादारभ्य पदं प्रवर्तताम् ।

(२०) उत्तरार्द्धे पञ्चमोगणः सर्वलघुस्तदापूर्व-वत् स्यात्

(२१) अन्त्य इत्यनुवर्तते । उत्तरार्द्धे षष्ठःगण

एकमात्रिक एव । षष्ठोज्-न्लौवा-आभ्यामपवादः ।
अत्रोदाहरणंममछन्दःशिरोमणौ ।

S I I१ S S२ I I I I३ I IS४ SS५ I S I६

“ओमिति नित्यं विलसति पुरतो वेदस्य यस्य

I I I I७S७|| S S१ SS २ S S३ SS४ I I I I५

दुरितहरेः ॥ तस्यार्य्यार्च्यंच्छन्दः पादौ सततम-

I६ I IS७S७||

हमभि वन्दे” ॥१॥

अत्रावान्तर पादव्यवस्थाऽभावात् ‘विलसति’ इत्यस्यान्ते ‘गन्ते’ इतिसूत्रेण गुरुत्वं न स्वीकृतम् । “दुरितह” इति सप्तमगणस्य “दु” इत्यस्मात्प्रथमाक्षरात् यतिर्जाता । तथोत्तरार्द्धे “सततम” इतिपञ्चमगणस्य “स” इतिप्रथमाक्षरादारभ्यपद-प्रवृत्तिर्जाता । अत्र (१४-१५-१६-१९-२०-२१) सूत्राणां मुदाहरणानि ।

I IS१ I S I२ S S३ S S४ S S५ I I I I६

“निवसन्ति काशिकायां ब्रह्माद्यास्तस्यपशुप

S S७ S||७||

तेः प्रीत्या” । अत्र “स्यपशुप” इति षष्ठोगणः सर्वलघुस्तस्मात् “स्या” इतिप्रथमाक्षरं त्यक्त्वा यतिर्जाता । अत्र (१७-१८) सूत्रोदाहणम् ।

त्रिषु गणेषु पादः पथ्याद्ये च[२२] । विपु-लाऽन्या[२३] चपला द्वितीयचतुर्थौ गमध्ये जौ[२४] पूर्व्वे मुखचपला[२५] ।

(२२) चकारोऽन्त्यइत्यनुकर्षणार्थः । यत्रार्य्यायां पूर्वार्द्धअन्त्यार्द्धे च त्रिषु त्रिषु गणेषु पादः समाप्यते सा पथ्यार्य्या । पादग्रहणं यत्युपलक्षणार्थम् । यथा "रघुपतिचरणे तथ्या भक्तिः पथ्या सदैव भवरोगे ।" अत्र तथ्या—सदैवेत्यत्र यतिः ।

(२३) पूर्वोक्त विश्रामाभावे विपुलार्य्या । सा च त्रिधाऽद्यन्तोभयपूर्वकत्वात् । आदिविपुला । अन्त्यविपुला । उभयविपुलार्य्या ।

(२४) यत्र समस्तयोरर्धयोस्तयोर्वोभयो रर्धयोः द्वितीयचतुर्थौ गणौ पश्चात्पुरः स्थितगुरुमध्यगौ जगणौ स्यातां सार्य्या—चपला नाम । अर्थात्-प्रथमो गणःद्विगुरुरन्त्यगुरुर्वा,—तृतीयोद्विगुरुः, पञ्चमोद्विगुरुरादिगुरुर्वा, द्वितीयचतुर्थौ गणौ मध्यगुरू स्याताम् । यथा "चपला न चेन्मुरारेः पदकञ्जवाञ्छा त्वदीयहृत्पद्मे" ।

(२५) यत्र केवलं पूर्वार्द्धे चपलालक्षणं सा मुखचपला ।

जघनपूर्वेतरत्र[२६]। उभयोर्महाचपला[२७]। आद्यर्द्धसमा गीतिः[२८]। अन्त्येनोपगीतिः[२९]। उत्क्रमेणोद्गीतिः[३०]। अर्द्धे वसुगण आर्यागीतिः।[३१]

(२६) उत्तरार्द्धे चपला लक्षणं चेत्सा जघनचपलार्य्या।

(२७) उभयोरर्द्धयोश्चपलालक्षणं सा महाचपलार्य्या।

(२८) यत्रार्यायांपूर्वार्द्धसममन्त्यार्धं सा गीतिः अस्योत्तरार्द्धेषष्ठोगणः जकारः सर्वलघुर्वा नकारः।

(२९) अन्त्यार्द्धतुल्यं पूर्वार्द्धं यस्याः सोपगीतिः। अत्राद्यर्धेषष्ठोगण एकमात्रिक एव।

(३०) यत्र पूर्वार्द्धतुल्यमुत्तरार्द्धमुत्तरार्द्धतुल्यंपूर्वार्द्धं सा-उद्गीत्यार्य्या।

(३१) यत्रार्य्यायां पूर्वार्द्धे अष्टौ गणाः साऽर्य्यागीत्यार्य्या। अत्राष्टमोऽपिगणश्चतुर्मात्रिक एव। विशेषानभिधानादुत्तरार्द्धोऽपितादृश एव। यथा "वाराणसीतु मुक्तिः स्थातव्यमास्थितरसीयमार्या गीतिः"। एतदुक्तं भवति एका पथ्या लिङ्गः विपुला(त्रिलिङ्गाश्चतस्रः) चपलाभेदत्रयैः प्रत्येकं विशेषिता द्वा-

**दृश्यान्या आर्य्या ततः सर्वात्मिका षोडशाऽऽर्याभा-**
**ता, एभिर्भेदैर्विभिन्ना गीत्युपगीत्युद्गीत्यार्यागीतिः**
**प्रत्येकं षाडशषोडशप्रकाराः सर्वाश्चैता मिलित्वा**
**(८०) अशीतिर्जायन्ते। अपरे(११)एकादशगीतिभेदाः**
**प्रदर्शिताः तद्यथा—**

---

सङ्गीतिः—यत्रार्य्यैवदलद्वयेऽप्यधिकैकगुरुयुता । सुगीतिः—पूर्वार्द्धं एवाधिकैकगुरूपेता । ३ प्रगीतिः—यदोत्तरार्द्धएव तादृक् स्यात् । ४ अनुगीतिः—सुगीतिरेव विपरीतार्धा यदा । ५ मञ्जुगीतिः—प्रगीतिरेव व्यत्ययार्धा यदा । ६ विगीतिः—यद्यधिकैकगुणार्योत्तरार्धेन पठितार्धद्वया भवेत् । ७ चारुगीतिः-यद्युद्गीतिर्द्वयोरप्यर्धयोराधिकगुरुयुक्ता । ८ वल्गुगीतिः—अर्यागीतिरेवैकगुरुहीनोत्तरार्धतायाम् । ९ ललिता—तस्या एव पूर्वार्धएवतथाभवेत् । १० प्रमदा—उपगीतिरेवाद्यार्धेऽधिकैकगुरुयुता । ११ चन्द्रिकागीतिः—सैवोत्तरार्धेऽधिकैकगुरुयुता स्यात् । इति ।

पूर्वोक्ताशीतिभेदरूपाणि । यथा—

१ पथ्यार्या । २ आदिविपुलार्या । ३ अन्त्यवि. । ४ उभयवि० ।
५ मुखचपलार्य्या । ६ मु. च. आ. वि. । ७ मु. च. अ. वि. । ८ मु. च. उ. वि. ।

९ जघन च. पथ्यार्या । १० ज. च. आ. वि. । ११ ज. च. अ. वि. ।
१२ ज. च. उ. वि. । १३ महाच. प. । १४ म. च. आ. वि. । १५ म. च अ. वि. ।

१६ म च. उ. वि. । १७ गी. प. । १८ गी. आ. वि. । १९ गी. अ. वि । २० गी. उ. वि. ।

अन्यान्यपिरूपाण्युदाहरणान्यपि च स्वयमूह्यानि । अथान्येऽप्यार्याभेदा गाथाप्रकरणे कथयिष्यत इति ।

वैतालीयं द्विः स्वरा अयुक्पादे युग्वसवोऽन्तेर्ल्गौ[३२]। गौपच्छन्दसकम्[३३]। आपातलिका भ्गौग्[३४]। शेषे परेण युङ् न साकम्[३५]।

(३२) ल इत्यनुवर्तते। यत्र प्रथमतृतीये पादे चतुर्दशलकारास्तथायुक्पादे षोडशलकाराश्चतुर्णां चरणानामन्ते रगणलघुगुरवः स्युस्तद्वैतालीयं नामछन्दः। अर्थात्प्रथमतृतीये षट्मात्रान्ते तथा द्वितीयचतुर्थेऽष्टमात्रान्ते रगणाद्याः स्युः। यथा "रामानुजमेघनादयोर्वैतालीयतनूभृतो रणे"॥

(३३) वैतालीयस्यान्तेऽधिक एको गुरुः स्यात्तद्गौपच्छन्दसकम् भवेत्। यथा "रघुनाथ समीहितं हनूमानौपच्छन्दसकं जगाद वाक्यम्"।

(३४) द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते इत्यनुवर्त्तनीयम्। पूर्वलक्षणयोरन्ते भगणो गकारद्वयञ्च तद्वैतालीयमापातलिका स्यात्। रेफलकारगकाराणामपवादः। यथा "आपातलिका खलु वेश्या विजहाति व्यसनोत्कनृपेन्द्रम्"॥

(३५) अत्र वैतालीयाधिकारे प्रथमतृतीये पादे षड्लकाराणां द्वितीये चतुर्थे च पादेऽष्टलका-

षट् चामिश्रा युजि[३६]। पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः[३७]। अयुक् तृतीयेनोदीच्यवृत्तिः[३८]।

राणां नियमोनोक्तः स "शेषः" तस्मिन् नियमः सिंहावलोकनन्यायेन क्रियते "युग्"लकारः "परेण" स्वपरेण "साकं न" मिश्रीकार्यः। द्वितीयस्तृतीयेन। चतुर्थःपञ्चमेन। युक्पादे तु षष्ठश्चसप्तमेनापीत्यर्थः। एवमादिशब्दश्लेषाणांमिश्रीभावोऽप्यनुज्ञातः।

(३६) न इत्यनुवर्तते। अत्र षट्लकारा युक्पादे चामिश्रा न कर्तव्याः। निरन्तरा षट्लघवः न कार्या इत्यर्थः प्रथमतृतीये पादे तु स्वरुचिः। लक्ष्यमुदाहरणे द्रष्टव्यम्।

(३७) शेष इति सूत्रापवादः। युजीत्यनुवर्तते। द्वितीयचतुर्थपादे पञ्चमेन साकं पूर्वश्चतुर्थः लकारः संतिष्ठते तदा "प्राच्यवृत्तिः" स्यात्। अतःपूर्वं रत्नाकरे दक्षिणान्तिका छन्दः यथा "तृतीययुग् दक्षिणान्तिका समस्तपादेषु द्वितीयलः"

(३८) पूर्वः साकमित्यनुवर्तते। प्रथमतृतीये पादे तृतीयेन साकं पूर्वः द्वितीयोलकारस्तदोदीच्यवृत्तिर्नाम। सूत्रद्वयोदाहरणं प्रहस्तके द्रष्टव्यम्।

आभ्यां युगपत् प्रवृत्तकम्[३९] । अयुक् चारुहासिनी[४०] । युगपरान्तिका[४१] । ( अथ मात्रासमकाधिकारः ) गन्ताद्विर्वसवो मात्रासमकं नवमः[४२] ।

(३९) प्राच्यवृत्त्युदीच्यवृत्तिभ्यामाभ्यां युगपत् प्रवृत्ताभ्यां तदा प्रवृत्तकं नामवैतालीयं स्यात् ।

प्रथम तृतीये–तृतीयेन द्वितीयः चतुर्थे पादे पञ्चमेन चतुर्थः लकारो भवेदित्यर्थः । यथा "निषादकृत पक्षिदर्शनात् आदिकाव्यकरणं प्रवृत्तकम्" ।

( ४० ) यस्य चत्वारः पादा अयुग् लक्षण युक्तास्तदा चारुहासिनी नाम । चतुर्दश मात्रित्वं तीयेन पूर्वस्ययोग इत्यर्थः ।

( ४१ ) यस्य चत्वारः पादायुग् लक्षण युक्ता-स्तदा–अपरान्तिका नाम षोडशमात्रित्वं पञ्चमेन पूर्वयोग इत्यर्थः ।

( ४२ ) वैतालीय मित्यादि सूत्रात् "पादे" इत्यनुवर्तनीयम् "ल" इति महाधिकारः । यत्र चत्वारः पादा गुर्वन्ताः सन्तः षोडश लकाराः स्युः

द्वादशश्च वानवासिका[४३] । विश्लोकः पञ्चमाष्टकौ[४४] । चित्रा नवमश्च[४५] । परयुक्तेनोपचित्रा[४६] ।

नवमी कला च लघु चेत्तदा "मात्रासमकं" नाम छन्दः। अत्र शेषे परेण युङ् न साकमित्यप्यनुवर्तना द्विसममात्रया सममात्रा युक्ता न कार्या । नवमे लघुत्वमन्ते गुरुत्वमिति नियमाच्छेषे नियमाभावः सूचितः । द्वौ लकारौ भङ्क्त्वा द्विमात्रिकगुरुकरणाय गन्तग्रहणमन्यथा "गन्ते" इत्यनेनैव सिद्धेः ॥ यथा "सीता प्रथम एव गृहत्यागात्, मात्रासमकं लभते कष्टम्" ॥

(४३) यस्य मात्रासमकस्य द्वादशाक्षरः लघुस्वरूपेण चकारान्नवमोऽपि संतिष्ठते तदा "वानवासिका" स्यात् । पदाकुलकेऽस्याः वक्ष्यमाणा नामप्युदाहरणानि ।

(४४) यत्र पञ्चमाष्टकौ लकारौ भवेतां चतुष्पादेषु तदा विश्लोकः स्यात् ।

(४५) यत्र नवमोलघुः चकारात्पञ्चमाष्टाकाव पि तदा "चित्रा" स्यात् ।

(४६) परयुक्तेन दशमेन सह मिश्रीभूतेन

एभिः पादाकुलकम्[४७] । ( अथगीत्यार्य्याछन्दोभेदोक्तिः ) गीत्यार्य्या लः[४८] । शिखा विपर्य्यस्तार्द्धा[४९] ।

नवमेन तदा "उपचित्रा" नाम छन्दः। पूर्वं लघुनियमेनेदन्तु गुरुनियमेनोक्तम् ।

( ४७ ) एभिः पञ्चानां छन्दसां पादैः समावेशितं "पादाकुलकं" नाम छन्दः स्यात्। यथा—"द्वादश दर्शनकुलकज्ञानं, बन्धालङ्कृतिमधुरकवित्वम् । ज्ञातुं विविधविबुधसंस्थानं वाञ्छसि मम गुरु काव्यमधीताम् ॥ १ ॥ अत्र प्रथमे मात्रासमकं, द्वितीये वानवासिका। तृतीये चित्रा, चतुर्थे पादे विश्लोकः तथा नवमदशमामिश्रितेनोपचित्रादा अप्युदाहरणम् ।

( ४८ ) गन्ताद्वित्यादि (४२) सूत्रात् द्विर्वत्वद्वत्यनुवर्तते। यत्र षोडशलकाराःसा गीत्यार्य्या स्यात्। यथा—"विलसति बुधततिरिह नृपतिरहसि"।

( ४९ ) सा गीत्यार्य्या विपर्य्यस्तार्द्धा शिखा। अर्द्धं सर्वलघु । अर्द्धं सर्वगुर्विर्वत्यर्थः। एवं तस्याः विनियोगभेदेन संज्ञा द्वयमाह ।

लः पूर्वश्चेज् ज्योतिः[50] । गश्चेत् सौम्या[51] ।
चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग्[52] ।

(५०) पूर्वार्द्धं चेत्सर्वलघुः तथोत्तरार्द्धं सर्वगुरुस्तदा ज्योतिर्नाम छन्दः। यथा—"अधिगत निखिल निगम निधिगुरुवरचरणयुगलकमलरजइह भजत । निःसारात्संसारान्मुक्त्यै ब्रह्मज्योतिस्साक्षात्कृत्यै" ।

(५१) पूर्वमित्यनुवर्तते । तस्याः शिखायाः पूर्वार्द्धं गश्चेत् उत्तरार्द्धं लघुस्तदा सौम्या स्यात् । अयमर्थः पूर्वार्द्धं षोडशाक्षरः । उत्तरार्द्धं द्वात्रिंशदक्षरः। शिखोदाहरणस्य व्यत्ययपाठात्सौम्योदाहरणमिति।

(५२) अर्द्धग्रहणमनुवर्तनीयम् । यस्य पूर्वार्द्धं गुर्वन्ता एकोनत्रिंशल्लकारा उत्तरार्द्धं एकत्रिंशदन्तेच गुरुस्तदा चूलिका जातिः । अन्तेगिति विशेषोक्त्यान्येषां लघुत्वं सूचितम् । यथा "दश-वदन रिपुकुल तिमिर तति हर! तव विशद सुर-तरु चरणे ॥ प्रणत बुध जन हृदय कमल विकसन मिहिर ! झटिति कुरु मयि करुणाम्" ॥१॥ अन्ये-रन्यथैव पुनरिदं सूत्रं पठ्यते "चूलिकार्द्धमेकोन-त्रिंशदन्ते गिति" तेषां मते द्वयोरप्यर्द्धयोर्गुर्वन्ता

## सा गु येन न समा लां ग्ल इति[५३]।

## ॥ इति चतुर्थोऽध्यायः ॥

एकोनत्रिंशन्मात्रा भवन्ति। तदोक्तोदाहरणेमयीति पदं त्यक्त्वा पठनीयः श्लोकः।

( ५३ ) येन यावद्भिरक्षरैः लां मात्राणां समाः समसङ्ख्याः ग्लः वर्णाः न भवेयुः "तेषांया संख्या" सा गुरु सङ्ख्या स्यात्।

---

| पंत्यङ्काः। | भेदविवरण चक्रम्। | | पंत्यङ्काः। |
|---|---|---|---|
| १ | मात्रा-वर्णौ | गुरु-लघू | १ |
| २ | मात्रा-लघू | वर्ण-गुरू | २ |
| ३ | वर्ण- गुरू | मात्रा-लघू | ३ |
| ४ | वर्ण-लघू | मात्रा-गुरू | ४ |
| ५ | मात्रा-गुरू | वर्ण-लघू | ५ |
| ६ | गुरु-लघू | मात्रा वर्णौ | ६ |

आद्या दक्षिण भाग स्था,१, पंक्तिः षष्ठी च वामगा ॥
सजातीयात्र विज्ञेया तथा दक्षिण वामगे ॥ १ ॥
द्वैतीयीका तृतीये च समे पंक्ती क्रमात्स्थिते,२, ॥
तथा दक्षिण वामस्थे तार्तीयीका द्वितीयके,३, ॥ २ ॥
तथा चतुर्थी पञ्चम्यौ.४, पञ्चमीतुर्य्यके तथा,५, ॥
षष्ठ्याद्ये,( ६ ) ताःसमा एक रेखया स्पष्ट मीक्षताम् ॥ ३ ॥
पंक्ती त्वंशद्वयस्थे ये संमुखस्थे विलक्षणे ॥
तयो रेकतरा ज्ञानमन्यस्या अवबोधकम् ॥ ४ ॥

तत्वं तु मात्रा वर्ण ल्ग चतुष्टयमयं वचः ॥
युग्नभेदाः सं भवन्ति षडेवात्र विलक्षणाः ॥ ५ ॥
तेषामेकस्य विज्ञानेऽन्येषां ज्ञानं न दुर्लभम् ॥
सूक्ष्मं निरीक्षमाणानां चक्रमित्यवधार्यताम् ॥ ६ ॥
तथाहि—
वागर्थाविव संपृक्ता वित्यष्टा स्वक्षरेषु लौ २ ॥
गाः षण्मात्रा इन्द्र, १४, संख्याः पाद आनुष्टुभे स्थिताः ॥ ७ ॥
तत्र चेद्विदिते संख्ये रस ६, नेत्र २, मिते गलयोः ॥
तदा तयोर्गतो वर्ण संख्या वस्वात्मिका, ८, स्थिरा ॥ ८ ॥
युग्मरूप २ ल संख्या या द्विघ्नया गुरु संख्यया ॥
द्वादशात्मिकया योगे मात्रासंख्या स्थिरा भवेत् ॥ ९ ॥
चतुर्दशात्मिकेत्येवं सर्वत्र ज्ञायतां बुधैः ( १ ) ॥
एवं वर्ण गयोः संख्ये ज्ञाते वसु ८, रसा ६, त्मिके ॥ १० ॥
तदा तयोर्युते ज्ञेया मात्रा संख्ये चतुर्दश, १४, ॥
रसात्मकेन, ६, गाङ्केन वर्णाङ्का अष्ट ८, तूनिताः ॥ ११ ॥
शिष्टौ लाङ्कौ नेत्र २ संख्याविथं सर्वत्र बुध्यताम् ( २ ) ॥
एवं मात्रा लयोरिन्द्र १४, नेत्र २, संख्येस्थिरे यदा ॥ १२ ॥
तदा लाङ्क द्वयन्यूना मात्राङ्का इन्द्र १४, संख्यकाः ॥
शिष्टा द्वादश ते चार्धी कृता गाङ्का रसात्मिका ६, ॥ १३ ॥
स्थिराः स्युस्, ते तु लाङ्काभ्यां युक्ता अष्टाक्षराङ्ककाः ( ३ ) ॥
एवमिन्द्र १४, रसा ६, त्मानौ मात्रागाङ्कौ स्थिरौ यदा ॥ १४ ॥
तदा रसात्म ६, गाङ्कोना मात्राङ्का इन्द्र १४, संख्यकाः ॥
शिष्टा अष्टावक्षराङ्काः सुस्थिरा एव धीमताम् ॥ १५ ॥
रसात्म ६ गांक रहिता वर्णाकास्त्वष्ट संख्यकाः ॥
शिष्टौ लांकौ स्थिरावेवेत्येवं सर्वत्र योज्यताम् ( ४ ) ॥ १६ ॥

एवं वस्वा ८, क्षि २, रूपाश्चेद् वर्णे लांका विनिश्चिताः ॥
तदा नेत्रात्म २ लांकोना वर्णांका वसु ८ संख्यकाः ॥ १७ ॥
शिष्टा रसात्म ६, गांकास्युस्, ते द्विघ्ना द्वादशात्मनी ॥
नेत्रात्म २, लांक सहिता मात्रांकाः स्युश्चतुर्दश ( ५ ) ॥ १८ ॥
एव मिन्द्रा १४, ष्ट ८ । रूपाश्चेज् ज्ञाता मात्राक्षरांकका: ॥
तदा वस्वात्म ८ वर्णांको नाममात्रांकिश्चतुर्दश ( ५ ) ॥ १९ ॥
शिष्टा गांका रसा ६, स्मानस् तदूनास्त्वक्षरांककाः ॥
वसु ८ संख्यास् , ततः शिष्टौ लांकौ निश्चिनुतां बुधः ( ६ ) ॥ २० ॥

---

अयं प्रदर्शितः प्रकारो दक्षिणांशगतानां परस्परं विलक्षणानां षण्णां पङ्क्तीनां मध्ये, उपरित आरभ्यावरोहण क्रमेणैक पङ्क्तिस्थ भेद संख्या निश्चये सति तत्संमुखस्थ तद्विलक्षणवामभागस्थ पंक्तिनिविष्ट भेदनिष्ठ सङ्ख्या ज्ञानोपयोगीति समक्षमेव सूक्ष्ममीक्षमाणानाम् । आरोहण क्रमेणतादृशसङ्ख्याज्ञानोपयोगी १) वामपार्श्वगततादृशभेद सङ्ख्या निश्चये सति, अवरोहण क्रमेणारोहणक्रमेणच ३ दक्षिणभागस्थ तादृश-भेदसङ्ख्या ज्ञानोपयोगिनौच प्रकारौ, दक्षिणपार्श्वस्थस्य वामभागस्थस्य वैकस्यकस्यचित् भेदस्य सङ्ख्यानिश्चयेसंति-अशतः साकल्येन वा तद्विलक्षणानां भागद्वये भिन्नपंक्तिस्थितानामवशिष्टानां पञ्चानामपिभेदा नामनु क्रमेणव्युत्क्रमेणच व्यस्तानां संहतानांच सङ्ख्यायाज्ञानोपयोगिन प्रकाराश्च बहवः परस्परं बिलक्षणाः संभवन्ति, तेतूक्तेष्वेव प्रकारेषुधी-मद्भिः शक्यन्ते निवेशयितुम्, अतिविस्तृताश्च प्रत्येकं विषदीकृत्यदुर्वचा अल्पप्रयोजननिरूपणा अपीत्यपरोक्षमेवेति शम् ।

**इति पिङ्गलछन्दः सूत्रस्यमनोरमा नाम टीकायाः पूर्वार्द्धंसमाप्तम् ॥**

## ॥ अथ पञ्चमोऽध्यायः ॥

वृत्तम्[१]। समर्द्धसमं विषमञ्च[२]। समं तावत् कृत्स्नः कृतमर्द्धसमम्[३]।

मनोरमा ।

गौरीं कटाक्षयन् सव्ये, जटास्वन्यां निवेशयन् ।
क्रीडयन् दक्षिणे पुत्रौ, स्वं ध्यायन् आसते विभुः॥१॥

(१) अधिकारोऽयमाशास्त्रपरिसमाप्तेः ।

(२) सर्वत्र समावयवत्वात् समम् । यस्य चत्वारः पादाः तुल्यलक्षणलक्षिताः तत्समं वृत्तम् । अर्द्धे समे यस्य तदर्द्धसमम् । यत्र पूर्वार्द्धतुल्यमुत्तरार्द्धं तदर्द्धं समम् । विगतं समं यस्य तद्विषमम् यत्र परस्परं भिन्नं लक्षणं तत् विषममिति त्रिधा वृत्तम् ।

*(३) समं समवृत्तसङ्ख्यया गुणितं तावत्कृत्स्नः कृतमर्द्धसमं स्यात् । अयमर्थः—समवृत्तसङ्ख्यागुणिते समवृत्तसंख्यायाः पिण्डे या संख्या निष्कृष्यते

* अष्टाक्षरस्य पादस्याष्टमाध्यायोक्तप्रस्तारप्रकारेण सर्वगुर्वादि सर्वलघ्वान्ताः द्विशतषट्पञ्चाशतेत्रभेदाः जायन्ते । तेषां मध्यात् क्रमव्युत्क्रमप्रकारेण कञ्चिदपि भेदद्वयमादायार्द्धसमवृत्ते कर्तव्ये गुणनप्रकार एष प्रदर्श्यते । यथा—

विषमञ्च[४] ।

तावत्संख्यमर्द्धं समं वृद्धयतात् । यथाऽस्मिन् वस्तु-निर्देशात्मके मङ्गले प्रतिपादं गमवृत्तसङ्ख्या द्विश-तषट्पञ्चाशत् प्रस्तारक्रमेण तस्यां गुणितायामर्द्ध-समवृत्तसङ्ख्या पञ्च षष्टिसहस्राणि पञ्चशतानि षट्त्रिंशत् । अङ्कतोऽपि ६५,५,३६ ॥

*( ४ ) अर्धसमस्य तावत् कृत्वः कृतम् । "विषमं" स्यात् । अयमर्थः । अर्द्धसमवृत्तसङ्ख्या—अर्द्ध समवृत्त सङ्ख्यैव गुणिता विषमवृत्त सङ्ख्या निष्प-द्यते । यतश्चार्बुदाण्येकोनत्रिंशत्कोटय एकोनपञ्चा-

---

गुणनप्रकारः ।

२,५६ गुण्याङ्काः ।
२,५६ गुणकाङ्काः ।

---

१,५,३६ षड्भिः षट्पञ्चाशदधिकद्विशते गुणिते जाताङ्काः ।
१,२,८० पञ्चभिः षट्पञ्चाशदधिकद्विशते गुणिते जाताङ्काः ।
५,१२ द्वाभ्यां षट्पञ्चाशदधिकद्विशते गुणिते जाताङ्काः ।

---

६५,५,३६ सङ्कलनया जाताङ्काः ।

गुणनप्रकारः—

६५,५,३६ गुण्याङ्काः ।
६५,५,३६ गुणकाङ्काः ।

---

राश्यूनम्[5] ।

शतान्यापि सप्तषष्टि सहस्राणि द्वे शते षण्णवतिः ।
अङ्कतोऽपि ४,२९,४९,६७,२,९६ ।

*(५) अर्द्धं समं विषमं वा तद्वृत्तं राश्यूनं स्यात् । मूलराशिसमुदायादपनीय इत्यर्थः । यस्यार्थेयुतान्येकोनत्रिंशत्कोटय एकोनपञ्चाशल्लक्षाण्येक सहस्रं सप्तशतानि षण्णवत्युत्तरं शुद्धविषमं वृत्तसङ्ख्या । अङ्कतोऽपि ४,२९,४९,०,१,७,६० । पञ्चषष्टिसहस्राणि द्वे शतेऽशीति शुद्धार्द्धसम वृत्त सङ्ख्या । अङ्कतोऽपि ६५,२,८० ।

उभयावशिष्टोऽसौ राश्यूनमिति ॥

---

३,९३,२,१६ षड्भिः पञ्चषष्टि सहस्र पञ्चशत षट्त्रिंशद् गुणिते जाताङ्काः ।
१,९६,६,०८ त्रिभिः ।
३,२७,६,८० पञ्चभिः ।
३,२७,६,८० पञ्चभिः ।
३,९३,२,१६ षड्भिः ।

---

४,२९,४९,६७,२,९६ सङ्कलनायां जाताङ्काः ।

* गुणिताङ्कसमुदायाद्गुण्याङ्कसमुदायोपनेतव्यप्रकारएष यथा—

ग्लिति समानी[६] । ल्गिति प्रमाणी[७] । वितानमन्यत्[८] ।

( ६ ) गुरुलघुभ्यां यद् वृत्त समाप्येत तत्समानी स्यात् । पादस्येत्यादि सूत्रेण (५।९) सिंहावलोकन न्यायेनानुष्टुब्ग्रहणमनुवर्त्तते । तेनात्राष्टाक्षरः पादः । यथा—"पण्डिताः समानतां न, जायते महीतलेऽत्र" ।

( ७ ) लकार गकाराभ्यां यद्वृत्त स्यात्तत्प्रमाणी नामानुष्टुब् छन्दः। यथा—"प्रमाणतां प्रयातु ते।

( ८ ) एताभ्यां समानीप्रमाणीभ्यामन्यत्सर्वं-भिन्नपदादिकं छन्दोजातं वितानं स्यात् । यथा-

---

४,२९,४९,६७,२,९६ एतस्माद्गुणिताङ्क समुदायात् ।
६५,५,३६ एतद्गुण्याङ्कसमुदायोपगते ।

---

४,२९,४९,०१,७,६० एतेऽङ्का अवशिष्यते । एते चार्द्ध समवृत्त सङ्ख्या विगताःशुद्ध विषम वृत सङ्ख्या बोधकाः सन्ति ।

पुनः ६५,५,३६ एतस्माद् गुणिताङ्कसमुदायात्
२,५६ एतद्गुण्याङ्क समुदायोपगते

---

६५,२,८० एतेऽङ्का अवशिष्यते ।

एते समवृत्त सङ्ख्या विगताश्शुद्धार्द्ध समवृत्तसङ्ख्याकायबोधकाः सन्ति ।

**पादस्यानुष्टुब् वक्त्रम्[9] । न प्रथमात् स्नौ[10] । द्वितीयचतुर्थयोरश्च[11] । वान्यत्[12] । य चतुर्थात्[13]**

"पीताम्बरैर्विंतानं यत्" । केचित्तु द्वौ गुरू, द्वौ-लघू, द्वौ-लघू, द्वौ-गुरू, द्वौ-गुरू, एको लघुः द्वौ लघू, एकोगुरुरित्यादिनियमः कृतः तन्न यतः सूत्रकारेण नियमाभावः सूचितः ।

(९) पादस्येत्यधिकारः सप्तमाध्यायपरिसमाप्तेः । अनुष्टुब् वक्त्रमित्यस्य तु (५।२७) पद्चतुरूर्ध्वादधिकारात् प्राक् स्यात् ।

(१०) अत्र पादस्य प्रथमाक्षरादूर्ध्वं सगणनगणौ न स्याताम् । प्रतिषेधार्थमेतत् ।

(११) द्वितीयचतुर्थयोः पादयोः प्रथमाक्षरादूर्ध्वं रगणश्च न स्यात् ।

(१२) सगणनगणातिरिक्तमन्यन्मगणादिकं वा स्यात् ।

(१३) चतुर्थाक्षरादूर्ध्वं यगणः स्यात् । य इति लुप्तविभक्तिकं पदम् । यथा "वक्त्रं ताजायते नैवं कौमुदीमन्तरा किञ्च ॥ छ्यःकृती प्रसितो भूयाः सदा स्यात्तव वक्त्रत्वम्" ॥१॥ वक्त्रछन्दमिदम् ।

पथ्या युजो ज्[14]। विपरीतैकीयम्[15]।
चपलाऽयुजो न्[16]। विपुला युग्लः सप्तमः[17]।

( १४ ) यत्र युजः पादस्य चतुर्थवर्णादूर्ध्वं जगणो भवेत् तद्वक्त्रं पथ्यानाम। यस्यापवादः। चतुर्थादित्यनुवर्तते। यथा "कण्ठं यस्य जनो नाप पथ्यां वाणीं निशम्य च ॥ श्री १०८ स गङ्गाप्रसादं तं देवज्ञं नौमि सादरम्" ॥२॥

( १५ ) पूर्वोक्ताद्विपरीतलक्षणा, एकीयमते पथ्या स्यात्। यथा "विपरीता वलक्षिणि, दैवेऽपथ्यात्वमायाति"।

( १६ ) अयुक्पादस्य चतुर्थवर्णादूर्ध्वं नगणः युजि तु यगणो भवेत्तदा चपला वक्त्रम्। यथा "[illegible]ः काम चपलाचाटुवाचं पुनः श्रुत्वा" ॥

( १७ ) अधिकारोऽयम्। यत्र युक्पादे सप्तमो लघु वर्णः तदा विपुला नाम। च चतुर्थादित्यस्यापवादः। युक्पादे सप्तमेन लघुना ध्रुवं भवितव्यम्। अयुजि चैतावता यकारस्यापवादः तथा च वक्ष्यति। पथ्यायान्तु गण एव संतिष्ठत इति विशेषः।

सर्व्वतः सैतवस्य[१८]। भौ न्तौ च[१९]।
प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्[२०]।

(१८) सैतवस्याचार्य्यस्य मतेन चतुष्पादेषु सप्तमोवर्णः लघुः स्यात्। यथा—"वामदेव ? महेश्वर! शम्भो! गिरिश! शङ्कर!॥ मुक्तिं वितर मां हृतं गृहीत्वा भौतिकं तनुम्" ॥ १ ॥

(१९) चपलाऽयुजो (१६) नित्यस्मादयुग्ग्रहणमनुवर्तते। विपुला युग्मः सप्तम इत्यनुवर्तते च। सर्वतःसैतवस्येति निवृत्तम्। प्रथमतृतीयपादे चतुर्थवर्णात्परतः यकारं बाधित्वा "यत्र भगण-रगण-नगण-तगणा विकल्पेन भवेयुः चात्र सगणोऽपि तदाऽसौ विपुला नाम। तत्र भगणेन विपुलोदाहरणम्। यथा "मनीषिपादाब्जरजः, प्रभाते मन्दसे मया" अयुज इति जाति पक्षे द्वयोरपि पादयोर्ग्रहणम्। आस्यां न द्वन्द्वादितिवत्। व्यक्ति पक्षे पुनरेकस्य। एक पक्षे पुनः प्रथमस्य तृतीयस्य वा। क्वचित् सगणेनापि विपुला दृश्यते। सर्वमुदाहरणं महाकवि प्रयोगेषु द्रष्टव्यम्। प्रायेण सर्वासां विपुलानां चतुर्थोऽर्णः गुरुरिति सम्प्रदायः।

(२०) अनुष्टुभः पादादूर्ध्वं प्रतिपादं चतुरक्षर

गावन्त आपीडः[२१]। आदौ चेत् प्रत्यापीडः[२२]। प्रत्यापीडो गवादौ च[२३]।

वृद्ध्या पदचतुरूर्द्ध्वं छन्दः स्यात्। यथा—"आ-
श्वयामसीलक्ष्मेऽभूत्, श्री १०८ मद्भिक्षकादत्त पाण्डेय
प्राज्ञः। रामायण कवौ मुक्तिधाम्नि याते पुन-
रपि, पदचतुरूर्द्ध्वं धर्मं विद्या योगाद्भ भद्रपुरे
संस्थापयन्॥ १॥ नेष्टिरत्र गुरुलघुविभागस्य।

( २१ ) यस्यान्ते द्वौ गकारौ तत्पदचतुरूर्द्ध्व
मापीडः स्यात्। अन्ते गुरुकथनाच्छेषाणां
लघुत्वं सूचितम्। यथा। "प्रथम वयसि शान्त्या-
स्मितयुतविधृत ललित वाचा॥ अधिगत बुधजन
चरण कमल नन्त्या-निज जनक हृदय कुमुद विक-
सन शशिधरोऽभूत्"॥ २॥

( २२ ) चतुर्णां पादानामादौ द्वौ गुरू तदा
प्रत्यापीडः स्यात्। अत्रापि शेषाणां लघुता।
यथा—"पुष्पावचय समिध, मृत्साकुशनयननिपुण-
कृति॥ अस्थाप्रभृति स गुरुकुलनिखिलभरण,
मेत्यानिश मतिधियजन यश उरुपदमभजत॥ ३॥

( २३ ) चकारोऽन्त्य इत्यनुकर्षणार्थः। आदा-
वन्तेच द्वौ गुरू तदापि प्रत्यापीडः स्यात् यथा

प्रथमस्य विपर्य्यासे मञ्जरीलवल्यमृत-धाराः[२४]। उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौ ग्[२५]।

"यः शिक्षकवधनान्ते-सद्यः स्वकहृदय कलितयुक्-त्या॥ प्रश्नात्पुनरपि निखिलनिगम निभृतार्थ-शिष्यासुलभ बुधवरपदमलभत निजगुरुभ्यः" ॥४॥

(२४) प्रथमस्य विपर्यासे मञ्जरी लवली अमृतधारा यथाक्रमं स्यात्। अयमर्थः प्रथमस्य-द्वितीयेन पादेन विपर्य्यासे मञ्जरी। प्रथमस्य तृतीयेन लवली। तथा प्रथमस्य चतुर्थेन-अमृतधारा नाम छन्दः स्यात्। तत्र मञ्जर्य्यां द्वादशाक्षरा ष्टाक्षर षोडशाक्षर विंशत्यक्षरपादैः क्रमेण घटितेति फलितार्थः। एवं लवल्यां षोडशाक्षर द्वादशाक्षरा ष्टाक्षरविंशत्यक्षराणीति। तथैवामृतधारायां विंशत्यक्षरद्वादशाक्षरषोडशाक्षराष्टाक्षराणीति सङ्कलितार्थः। तिसृणामुदाहरणानि पदचतुरूर्द्ध्वो-दाहरणे व्यत्ययेन ज्ञेयमिति।

(२५) यत्र प्रथमे पादे सगण जगण सगण लघुभिर्दशाक्षराणि, द्वितीये नगण सगण जगण गुरुभिर्दश॥ अथ तृतीये पादे भगण नगण जगण

तृतीयस्य सौरभकं नौं भगौ[२६]। ललितं नौ सौ[२७]। उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ

लघुगुरुभिरेकादशाक्षराणि। चतुर्थे पादे च सगण जगण सगण जगण गुरुभिस्त्रयोदश वर्णाः सोद्गता नाम, तामेकतः पठेत्। उपस्थितेत्यादिसूत्रेण (२८) सिंहावलोकन न्यायेनाद्यमनुवर्तते। तेन द्वितीयेन सह प्रथमं पादं शीघ्रतया वक्तव्यमित्यर्थः॥ यथा—"स्तवनै र्धनादि विधिनापि, कृत गुरु पदाब्ज पूजनः॥ आश्रममभिगमनाय परं सुकुलोद्गतां द्विजसुतामुवोढ सः" ॥ ५ ॥

( २६ ) यत्रोद्गतायास्तृतीयस्य पादस्य स्थाने रगण नगण भगण गुरु भिर्दशाक्षराणि तत् सौरभकं नाम छन्दः। तदोद्गतोदाहरणस्य तृतीय पाद स्थाने "शास्त्रभूषण सौर भकी"मिति पठित्वा पूरणीयः श्लोकः॥

( २७ ) यत्र तस्या एवोद्गतायास्तृतीय पाद स्थाने द्वौ नगणौ द्वौ सगणौ च भवेतां तल्ललितं नाम वृत्तम्॥ तदोद्गतायास्तृतीये पादे 'ललितमनुभवितुमाश्रमक' मिति पठित्वा परणीयः श्लोकः।

गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ[२८]। वर्द्धमानं नौ स्नौ न्सौ[२९] । शुद्धविराड्ऋषभं तज्राः[३०] ।

( २८ ) यत्र प्रथमे पादे मगण सगण जगण भगणाः गुरू च द्वितीये सगण नगण जगण रगण गुरु भिस्त्रयोदशाक्षराणि तथा तृतीये नगणौ सगणश्च चतुर्थे पादे नगणत्रयं जगण यगणौ च तदुपस्थितप्रचुपितं नाम वृत्तम्। प्रथमः पादो द्वितीये न सह पृथक् पठेत्। श्लिष्टत्वेन वक्तव्यमित्यर्थः। यथा "नित्यं नित्यमलङ्कार शालिश्वरेणयो, स्वगृहे निगमततीरूपस्थितेभ्यः ॥ अधिगत चरण रजः, प्रणति विभविन इतिह यस्य बुधेन्द्राः ॥६॥

( २९ ) तृतीयस्ये (२६) त्यनुवर्तते। यत्रोपस्थितप्रचुपिते तस्मिन् तृतीयस्य पादस्य स्थाने नगणौ सभण नगणौ नगश्च सगणौ च भवेतां तदा-वर्द्धमानं नाम वृत्तम् ॥ तत्रोपस्थित प्रचुपितस्य तृतीये पादे 'अधिगत सुरतरु रूप चरण कमलरजः' इति पठित्वा पूरणीयः श्लोकः।

( ३० ) यत्रोपस्थित प्रचुपितस्य तृतीये पादे तगण जगण रगणाः स्युः तदा शुद्ध विराड्ऋषभं नाम

## ॥ अथ-अर्द्धसमच्छन्दो भेदोक्तिः ॥

**अर्द्धे[३१]। उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग्[३२]। द्रुतमध्या भौ भ्गौ ग्, न्जौ ज्यौ[३३]। वेगवती सौ स् गौ, भौ भ्गौ ग्[३४]।**

वृत्तम् । तदोपस्थितप्रचुपिते तस्मिन् "प्रामाङ्घ्रि पयोज सद्रजः"—इति पठित्वा पूरणीयःतृतीयःपादः॥

( ३१ ) अधिकारोऽयमध्याय परि समाप्तेः ।

( ३२ ) यत्र प्रथमे पादे त्रयः सगणाः लघु गुरु च तथा द्वितीये पादे त्रयो भगणा गुरुद्वयञ्च तद् उपचित्रकं नाम छन्दः । यथा "तरुणी वदनै रुपचित्रकं, केशव कायमिमं जमुनायाम्" ॥

( ३३ ) यत्र प्रथमे पादे त्रयो भगणा गुरु द्वयञ्च तथा द्वितीये नगण जगणौ जगण यगणौ तद् द्रुत मध्या नाम। यथा "नग्नवती तटगा द्रुतमध्या, मधुरिपुपाद पयोजरताऽसीत्"॥

( ३४ ) यत्र प्रथमे पादे त्रयः सगणा एको गुरुश्च तथा द्वितीये त्रयो भगणा गुरुद्वयञ्च तद् वेगवती नाम वृत्तम् ॥ यथा "अति वेगवती जमुनाऽसौ, माधव पाद रुचा निअलीना"॥

भद्रविराट् तूजौ गौ, म्सौ ज्गौ ग्[35]। केतुमती स्जौ स्गौ, भ्रौ न्गौ ग्[36]। आख्यानिकी तौ ज्गौ ग्, ज्तौ ज्गौ ग्[37]।

( ३५ ) यत्र प्रथमे पादे तगणजगणौ रेफगुरू च तथा द्वितीये मगण सगण जगणा गुरू च तद् भद्र विराट् वृत्तम् ॥ यथा "तं भद्रविराजमालिखन्नुर, न्यौपच्छन्दसकैः सुचाटु वाग्भिः" ॥ अस्यार्द्धसमाधिकारे पाठः संज्ञा विशेषार्थः। यतोऽदो गणत औपच्छन्दसकम् ॥

( ३६ ) यत्र प्रथमे पादे सगण जगण सगण गुरवः, द्वितीये भगण रगण नगणाः गुरुद्वयञ्च तत् केतुमती नाम। यथा "न मुरारि चाप परिचेः प्राक्, केतुमती जगाम नृपसेना"।

( ३७ ) यत्र प्रथमे पादे तगणौ जगणः गुरू च द्वितीये जगण तगण जगणाः गुरुद्वयञ्च तदाख्यानिकी नाम वृत्तम् ॥ यथा "आख्यानिकी चेदुपजातियुक्ता, व्रजेषु वालो हरणाय रात्रौ"। उपजाति प्रस्तारस्यैकादशोऽयंभेदोऽपि।

विपरीताख्यानिकी ज्तौ ज्गौ ग्, तौ ज्गौ ग्[३८]। हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ[३९]। अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ[४०]।

(३८) यत्र प्रथमे पादे जगण तगण जगणाः गुरू च द्वितीये तगणौ जगणः गुरुद्वयञ्च तद् विपरीताऽऽख्यानिकी वृत्तम् ॥ यथा "समान वृत्ताऽप्यसमान वृत्ता, दाख्यानिकीयं विपरीतवृत्तिः"॥ अतः समं गणतोऽर्द्धसमं वृत्तम्। उपजाति प्रस्तारस्य षष्ठोऽयं भेदोऽपि। संज्ञाविशेषार्थं मिहोपन्यस्तः।

(३९) यत्र प्रथमे पादे त्रयः सगणाः लघु गुरू च द्वितीये नगण भगणौ भगण रगणौ तद्, हरिणप्लुता नाम वृत्तम्। यथा 'मधुसूदनशाङ्गं पुरः शरं, व्रजति यातुयति हरिणप्लुताम्" ॥

(४०) यत्र प्रथमे पादे नगणौ रगणः लघु गुरू च द्वितीये नगण जगणौ जगण रगणौ तद् वृत्तमपरवक्त्रं नाम स्यात्॥ यथा—"असकृदपर वक्त्र दर्शने, रतमिह कृष्ण मुखाब्जमीक्षताम्" ॥ यद्यप्यत्र युक्पादे रलगा न पतिताऽस्तथाप्येक देश विकृतमनन्यवदितिन्यायेनेदं वैतालीयमपि। संज्ञाविशेषार्थमिहोपन्यस्तः॥

पुष्पिताग्रा नौ यौ, न्जौ ज्रौ ग्[४१] । यवमती जौं जौं, ज्रौ ज्रौ ग्[४२] । शिखै-कोनत्रिंशदेकत्रिंशदन्ते ग्[४३] ।

( ४१ ) यत्र प्रथमे पादे नगणौ रगण यगणौ च द्वितीये नगण जगणौ जगण रगणौ गुरुश्च तत् पुष्पिताग्रा नाम वृत्तम् । "यथा" विलसति गण नाथ दन्तरेखा, सितशतपत्र कलीव पुष्पिताग्रा" । अन्यथा अप्यौपच्छन्दसकान्ततः पादित्वेऽपि विशेषसंज्ञार्थमुपन्यस्तः।

( ४२ ) यत्र प्रथमे पादे रगण जगणौ पुनरपि-रगण जगणौ द्वितीये जगण रगणौ पुनरपि जगण रगणावेको गुरुश्च तद् यवमती नाम वृत्तम् ॥ यथा "पद्मशङ्ख चक्र छत्र वाजिहस्ति, यत्राङ्किता मनोरमा लभेत सद्यः" ॥

( ४३ ) यत्र प्रथमे पाद एकोन त्रिंशदक्षराणि द्वितीये चैक त्रिंशत् द्वयोरपि पादयोरन्ते प्रत्येकं गुरुः तद्वृत्तं शिखा नाम । अन्ते गुरुकथनाच्छेषाणां लघुत्वं सूचितम् । तेन प्रथमे तृतीये च पादेऽष्टाविंश-त्यक्षराणि लघून्यन्ते गुरुः । युजितु त्रिंशल्लघवोऽन्ते

खञ्जा महत्ययुजीति[४४]।

## ॥ इति पञ्चमोऽध्यायः ॥

गुरुरेकः तद्वृत्तं शिखा नाम। यथा "अधवल गिरिसममभिमुदधिपुट अमर तरुवर लिपि कलम चयः, खलमखिल जगदिदमयनिखिल युग समय उपकरण सकलसहिता। अर्द्ध श्लोकोऽयम्॥

(४४) तृतीयमेव शिखाऽयुजि पादे महति बह्वक्षरे खञ्जा स्यात्। अयमर्थः प्रथमे तृतीये च पाद एक त्रिंशदक्षरः तथा द्वितीये चतुर्थे च पादे त्रिंशदेवाक्षरः। तत्र शिखो दाहरणस्य व्यत्ययेन पाठात्स्या उदाहरणमपीति।

---

अथान्येऽपि मात्रा वर्णात्मक छन्दांसि वर्तन्तेऽर्धसमवृत्ताऽधिकारे तद्यथा—

१ ललितपदम्—यत्रषोडश मात्रा विषमे, समे च पादे द्वादश कलाः स्युः।

२ अनङ्गक्रीडा—पूर्वार्द्धेऽष्टौ भगणाः, अन्त्यार्द्धेऽष्टौ नगणाः।

३ चतुष्पदा—विषमे षोडश, समे चतुर्दश मात्राः स्युः।

४ मोहिनी—विषमे त्रयोदश, समे दश मात्राः स्युः।

५ हरिपदम्—विषमे षोडश, समे द्वादश मात्राः स्युः।

# ॥ अथ षष्ठोऽध्यायः ॥

## यतिर्विच्छेदः[1] ।

(१) अथ यतिरित्यधिकारः सप्तमाध्याय परिसमाप्तेः। विच्छिद्यते विश्राम्यते यदा पाठोऽस्मिन्निति विच्छेदः जिह्वेष्ट विश्राम स्थानमित्यर्थः। यतिशब्दस्याधिकरण व्युत्पत्त्या वक्त्राद्यवच्छिन्नेषु वर्णेषु यतिः करणीया । तच्च कथयिष्यते ।

---

नोक्तं यद्यपि नागेनोक्तादीनां निरूपणम् ॥
तथाप्यात्रैष्टुभादार्षे लोकेऽपि स्यादितीरितम् ॥ १ ॥
तस्मादेक द्वि त्रि चतुःपञ्च वर्णाङ्घ्रि छन्दसाम् ॥
उक्ताऽत्युक्ता ततो मध्या प्रतिष्ठा सुप्रतिष्ठिका ॥ २ ॥
इति संज्ञाः कृताः पूर्वैः सूत्रकार दिशैव तैः ॥
ता आदाय मया छन्दो लिख्यते क्रमशोऽक्षरात् ॥ ३ ॥

| | | | |
|---|---|---|---|
| १ | उक्तायाम्——श्रीः | १ | यत्रैको गुरुःस्यात् । |
| २ | अत्युक्तायाम्—स्त्री | १ | यत्र द्वौ गुरू । |
| | मही | २ | आद्यो लघुः द्वितीयो गुरुः । |
| ३ | मध्यायाम्——नारी | १ | यत्र मगणः स्यात् । |
| | रमणी | २ | द्वौ लघू–अन्त्योगुरुः । |
| | कमलिनी | ३ | यत्र नगणः स्यात् । |
| ४ | प्रतिष्ठायाम्——कन्या | १ | चत्वारो गुरवः । |
| | क्रीडा | २ | आद्यो लघुः त्रयो गुरवः । |

**तनुमध्या त्यौ[२]। कुमारललिता ज्सौ ग्[३]।**

(२) गायत्रे छन्दसि (क) यत्र तगणयगणौ सा तनुमध्या। यत्र यतिः सूत्रे नास्ति तत्र पादान्ते कर्तव्या सर्वत्र। यथा "भूयात् तनुमध्या"। चतुष्षष्टिभेदेषु त्रयोदशोऽयं भेदः। तच्चाष्टमाऽध्यायोक्तोद्दिष्ट क्रियया (८।२६) ज्ञेयः सर्वत्र।

(३) उष्णिहि (ख) कुमार ललिता अस्याः गणाः सूत्रे स्पष्टः पौनरुक्त्य मात्र फलत्वा-

---

| | | |
|---|---|---|
| दोला | ३ | द्वौ लघू द्वौ गुरू। |
| धरा | ४ | तृतीयो लघुः। |
| ५ सुप्रतिष्ठायाम्—अक्षरपङ्क्तिः | १ | द्वितीय तृतीयौ लघू। |
| कण्ठी | २ | प्रथम द्वितीयौ लघू। |
| कणिका | ३ | तृतीय चतुर्थौ लघू। |
| शिला | ४ | द्वितीय पञ्चमौ गुरू। |
| सुलू | ५ | पञ्चमो गुरुः केवलः। |

(क) शशिवदना—यत्र नगणयगणौ। १। सङ्ख्या ६४।

विद्युल्लेखा—यत्र द्वौ मगणौ। २।

वसुमती—यत्र तगण सगणौ। ३।

(ख) मदलेखा—मगण सगण गुरुभिः। १। सङ्ख्या १२८।

हंसमाला—सकार रकार गकारैः। २।

मधुमती—नगण नकार गुरुभिः। ३।

चूडामणिः—तगण भगण गकारैः। ४।

माणवकाक्रीडितकं भ्तौ लगौ[४]। चित्रपदा भौ गौ[५]। विद्युन्माला मौगौ[६] हंसरुतं म्नौ गौ[७]। भुजग शिशुसृता नौ म्[८]।

इपि गणतोवर्णतश्च विशदीक्रियते।

यत्र जसगाः। द्वितीय षष्ठ सप्तमवर्णाः दीर्घाःसा कुमार ललिता नाम च्छन्दः। त्रिभिश्चतुर्भिर्यतिः। यथा "कुमारललितेयम्"

(४) अनुष्टुभि। अष्टाक्षरः सर्वत्र।

यत्र भतलगाः। प्रथम चतुर्थ पञ्चमाष्टम वर्णा दीर्घा तन्माणवकाक्रीडितकम् वृत्तम्।

चतुर्भिश्चतुर्भिर्यतिः। यथा माडवका क्रीडितकं।

(५) यत्र भभ गगाः। प्रथम चतुर्थ सप्तमाष्टमा दीर्घा तच्चित्रपदा छन्दः।

चित्रपदा नृपलक्ष्मीरित्युदाहरणम्। पञ्चमाध्यायोक्त-वितानादिना गतार्थमपि वैशद्यार्थमुक्तिरियम्।

(६) यत्र मम गगाः। सर्ववर्णा दीर्घास्तदा विद्यु-न्माला नाम।

लोला दीर्घा विद्युन्मालेत्युदाहरणम्। चतुर्भिर्यतिः।

(७) यत्र मनगगाशश्चतुर्थ पञ्चम षष्ठवर्णा लघव स्तद्धंसरुतम् यथा "श्राव्यं हंसरुतमेतत्।

(८) बृहत्याम (६) यत्र नन माः सप्तमाष्टमनवमा स्वस्तद्भ भजगशिशु भृ (सृ) ताछन्दः।

## हल मुखी र्नौ स्९। शुद्धविराण् म्सौ ज्गौ१०। पणवो म्नौ य् गौ११। रुक्मवती भ्मौ स् गौ १२। मयूरसारिणी र्जौ र्गौ१३। मत्ता म्भौ

यथा "भुजगशिशुसृता तन्वी"। अत्र सप्तभि र्द्वाभ्याञ्च यतिः।

(९) यत्र रनसाः प्रथम तृतीय नवमा गुरवस् तद् धलमुखा नाम।

यथा "स्वैरिणीं जहि हलमुखीम्" । त्रिभिः षड्भिर्यतिः।

(१०) पङ्क्तौ (१०) यत्र मस जगाश् चतुर्थ पञ्चम सप्तम नवमा लघव स्तच्छुद्ध विराड्।

यथा "देवश्शुद्धविराड् विराजते"।

(११) यत्र मनयगाश् चतुर्थ पञ्चम षष्ठसप्तमा लघवस्तत् पणवच्छन्दः। पञ्चभिः पञ्चभिर्यतिः। यथा "वारस्त्री पणवरवैः सार्द्धम्"।

(१२) यत्र भम सगाद्वितीय तृतीय जनमाष्टमवर्णाः ह्रस्वाः तत् रुक्मवती च्छन्दः।

यथा "रुक्मवती तारुण्यवती चेत्"।

(१३) यत्र रजरगा द्वितीय चतुर्थ षष्ठाष्टमालघवस् तन्मयूरसारिणीवृत्तम्।

यथा "सा मयूरसारिणी निशान्ते"।

सगौ[१४]। उपस्थिता तजौ जगौ[१५]। इन्द्रवज्रा तौ जगौ ग्[१६]। उपेन्द्रवज्रा जतौ जगौ ग्[१७]। आद्यन्तावुपजातयः[१८]।

(१४) यत्र मभसगाःपञ्चम षष्ठसप्तमाष्टमा लघवस्तन्मत्ताः छन्दः।

अत्र चतुर्भिः षड्भिर्यतिः। यथा "हृद्या रक्ता रमयति मत्ता"।

(१५) यदि तज जगाः प्रथम द्वितीय पञ्च माष्टम दशमा गुरवस्तदोक्तपस्थिता वृत्तम्।

अत्र द्वाभ्यामष्टाभिश्च यतिः। यथा—"प्रेमात्प्रियपान्थमुपस्थिता"।

(१६) त्रिष्टुभि ११

यत्र तत जगगास्तृतीय षष्ठ सप्तम नवमाः ह्रस्वास्तद् इन्द्रवज्राछन्दः।

यथा—"तीक्ष्णेन्द्र वज्राभिहतिः परास्ता"।

(१७) यत्र जतजगाः प्रथम तृतीय षष्ठ सप्तम नवमा ह्रस्वा स्तदुपेन्द्रवजाछन्दः।

यथा—उपेन्द्र वज्राभ्युदयेन विभ्रम्॥

(१८) यत्र इन्द्रवज्रोपेन्द्रवज्रयोः पादावाद्यन्तावनन्तरोक्तौ तौ विकल्पेन कामं भवेतां तदा प्रस्तारवशाच्चतुर्दशोपजातयः स्युः। तद्यथा—

**दोधकं भौ भगौ ग्[१९]। शालिनी म्तौ तगौ गसमुद्र ऋषयः[२०]। वातोर्म्मी म्भौ त्गौग्[२१]।**

| | | | | | |
|---|---|---|---|---|---|
| १ | कीर्तिः | उ इ इ इ। | ८ | बाला | इ इ इ उ |
| २ | वाणी | इ उ इ इ। | ९ | आर्द्रा | उ इ इ उ |
| ३ | माला | उ उ इ इ। | १० | भद्रा | इ उ इ उ |
| ४ | शाला | इ इ उ इ। | ११ | रामा | उ उ इ उ |
| ५ | हंसी | उ इ उ इ। | १२ | सिद्धिः | इ इ उ उ |
| ६ | माया | इ उ उ इ। | १३ | ऋद्धिः | उ इ उ उ |
| ७ | जाया | उ उ उ इ। | १४ | बुद्धिः | इ उ उ उ |

चतुरक्षर प्रस्तारस्य षोडशभेदा एव जायन्ते। तत्राद्यः (इ इ इ इ) शुद्धेन्द्र वज्रायाः। अन्त्यः (उ उ उ उ) शुद्धोपेद्रवज्राया ज्ञातव्या। अयमर्थः यत्र प्रथमः पाद उपेन्द्रवज्राया अन्ये त्रय इन्द्रवज्रायाः सा कीर्तिः। एवं सर्वा बोध्याः। उदाहरणान्यूह्यानि। कैश्चिदिदं सूत्रं न्यायोपलक्षण-मुच्यते। तदा वंशस्थेन्द्रवंशाभ्यां तथा शालिनी वातोर्मी पादाभ्याश्चाप्युपजातयः स्युः। ता महा-कवीनां प्रयोगानुसारेणोपजातयो द्रष्टव्या इति॥

(१९) यत्रभभभ गगाः प्रथम चतुर्थ सप्तम दशमैकादशवर्णा गुरवोऽन्त्येयति स्तद् दोधकम्।

यथा—"दोग्धिनृपंखलुदोधक वृत्तम्"॥

(२०) यत्र मतत गगाः षष्ठनवमौ ह्रस्वौ तच्छालिनी-

**भ्रमरविलसिता म्भौ न्लौ ग्[२२] । रथोद्धता र्नौ र्लौ ग्[२३] । स्वागता र्नौ भ्गौ ग्[२४] ।**

**वृन्ता नौ स्गौ ग्[२५]। श्येनी र्जौ र्लौ ग्[२]**

वृत्तम् । चतुर्षु सप्तसु यतिः । यथा-"प्राद्यैः शस्त्रा... शालिनी शालिकेयम्" ।

(२१) यत्र मभतगगाः पञ्चमषष्ठनवमाः ह्रस्वास्तद् वातोर्मी वृत्तम् ।

अत्र पूर्वोक्ता यतिः । यथा "वातोर्म्मीभिर् मिलित भामिनीयम्"

(२२) यत्र म भ न ल गा एक द्वित्रिचतुरेकादश वर्णा दीर्घा स्तद् भ्रमर विलसिता छन्दः । सैव यतिः

यथा "मध्ये मध्ये भ्रमर विलसिता" ।

(२३) यत्र र न र ल गा एकत्रि सप्तनवैकादशवर्ण दीर्घा स्तत् रथोद्धता छन्दः । अन्तेयतिः ।

यथा "प्रेजते यदि रथोद्धताश्वभिः ।

(२४) यत्र र न भ ग गा एकत्रिसप्तदशैकादश वर्ण गुरव स्तत्र स्वागताछन्दः । अन्त्येयतिः ।

यथा "स्वागतानि कथयन्ति शकुन्ताः"

(२५) यत्र न न स ग गा नवदशैकादशाक्षरा-णिगुरूणि तद्वृन्तावृत्तम ।

विलासिनी ज्रौ जगौ ग्[27]। जगती[28]।
वंशस्थाजतौ ज्रौ[29]। इन्द्रवंशा तौ ज्रौ[30]।
द्रुतविलम्बित न्भौ भ्रौ[31]। तोटक सः३[32]।

(२५) अत्र यत्यर्थं—मण्डूकप्लुत्या (२०सू०) समुद्र ऋषय इत्यनुवर्तते। यथा—"वनभुवि पतति सुमं वृन्तात्"।

(२६) यत्र र ज र ल गाः समवर्णा लघवोऽन्त्ये यतिश्च साश्येनी। यथा "श्येनिकेव साऽददाति भूमिपम्

(२७) यस्यां जर ज गगाः समवर्णा अन्तिमश्च गुरवः सैव यतिः सा विलासिनी।

यथा "विलासिनी विलोकनैः समूचे"।

(२८) [१२] अधिकारोऽस्याध्यायपरिसमाप्तेः।

अोटका (३२। ३८। ३९) द्यर्थमिदं सूत्रम्।

(२९) यदि जतजराः द्विवेद पञ्चाष्टदशद्वादशवर्णा गुरव स्तदा सा वंशस्था। पादान्ते यतिः।

यथा "गलेऽपि वंशस्थमहार्घमौक्तिका"।

(३०) यस्यां ततजराः त्रिषष्ठसप्तमनवमैकादशवर्णा दीर्घाः सेन्द्रवंशा यतिः पादान्ते।

यथा "अस्तीन्द्र वंशाङ्कुर काकभञ्जकः।"

(३१) यस्यपादेषु न भ भ राः तुर्यसप्तदिग्-द्वादशवर्णा दीर्घा स्तद्द्रुतविलम्बितम्। सैवयतिः।

यथा "द्रुतविलम्बित-पाठपरायणः"

(३२) जगत्यधिकाराञ्चत्वारः सगणा ग्राह्याः।

**पुटो नौ म् यौ वसु समुद्राः[३३]। जलौद्धत-गतिर्, जसौ जसौ रसर्त्तवः[३४]। कुसुम विचित्रा न्यौ न्यौ[३५]। ततं नौ म्रौ[३६]।चञ्च-लाक्षिका नौ रौ[३७]। भुजङ्गप्रयातं यः[३८]।**

(३२) तस्मात् प्रतितृतीयमक्षरं गुरुस्यात्। सैवयतिः। यथा "हरिणावधि तोटक दैत्यगणः"।

( ३३ ) यस्मिन् ननमया सप्ताष्टनवैकादशद्वादशवर्णा दीर्घा सः पुटः। अत्राष्टभिश्चतुभिर्यतिः।

यथा विकिरति पुटता सौ पुष्पराशिः"

( ३४ ) यस्यां पुनरपि जगण सगणौ द्विषडष्ट सूर्यवर्णा दीर्घा षड्भिःषड्भिर्यतिः सा जलोद्धत गतिः।

यथा "न पश्यति भवान् जलोद्धतगतिम्।

( ३५ ) यस्यां द्विवारं नयौगणौ पञ्चषडेकादशद्वा-दशवर्णा दीर्घा यतिश्चपूर्वोक्ता सा कुसुमविचित्रा।

यथा "उपवनराजिः कुसुम विचित्रा"।

( ३६ ) यस्मिन् वृत्ते ननमरा अर्थात्सप्तमादि चतुष्टयमन्ति मञ्चाक्षरं गुरुयतिरन्ते तत् ततं नाम।

यथा "अभिलषति कटाक्षं लक्ष्मीततम्"।

( ३७ ) यस्यां ननररा: सप्तनवदशद्वादशवर्णादीर्घा सैव यतिः सा चञ्चलाक्षिका।

यथा "अभिसरति नु चञ्चलाक्षी सदा।

( ३८ ) अत्रापि चत्वारो यगणा जगत्यधिकाराद् ग्राह्याः। प्रथमचतुर्थसप्तमदशमालघवस्तद्भुजङ्गप्रयातम्

सृग्विणी रः३९। प्रमिताक्षरा स्जौ सौ४०। कान्तोतपीडा भ्मौ स्मौ४१। वैश्वदेवी मौ याविन्द्रिय ऋषयः४२। वाहिनी त्मौ म्यावृषिकामशराः४३। नवमालिनी न्जौ भ्याविति४४। षष्ठोऽध्यायः॥

(३८) यथा "भुजङ्गप्रयातेन खिन्नः खगेन्द्रः।

(३९) यत्र चत्वारो रेफाः सास्रग्विणी।

द्विपंचाष्टैकादशवर्णा अत्र लघवः।

सर्वत्रानुक्तस्थले पादान्ते यतिर्ज्ञेया। यथा—सृग्विणी सुन्दरीदारिका दीप्यते"।

(४०) यस्यां सजससाः त्रिपंचनवान्त्या गुरवः सा प्रमिताक्षरा। यथा "प्रमिताक्षरापि विशदार्थवनी"

(४१) यस्यां भमयसमा द्वित्रिसप्ताष्टमालघवः सा कांतोत्पीडा।

यथा—कामुकयोगैर्नश्यति कान्तोत्पीडा"।

(४२) यस्यां ममययाः सप्तमदशमौ ह्रस्वौ पंचभिः सप्तभिश्चयतिः सावैश्वदेवी।

यथा—कुर्याद्भद्रेवो वैश्वदेवो सदेष्टिम्"।

(४३) यस्यां तममयाः तृतीय दशमौ ह्रस्वौ सप्तसु पंचसु यतिः सा वाहिनी।

यथा—स्वांवाहिनीमातस्थौश्रीकृष्णचन्द्रः"॥

## ॥ अथ सप्तमोऽध्यायः ॥

प्रहर्षिणी म्नौ ज्रौ ग् त्रिक दशकौ[१] । रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ[२] । मत्तमयूरं म्तौ य्सौ ग् समुद्र नवकौ[३] । गौरी नौ नसौ ग्[४] ।

( ४४ ) यस्यां नजभयाः पंचसप्तैकादश द्वादशवर्णा दीर्घा सा नवमालिनी ।

अत्राष्टाभिश्चतुर्भिर्यतिः । यथा—तव नवमालिनीति बहुमान्या"॥ इति शब्दः षष्ठाध्यायन्तसूचकः ।

———o———

( १ ) अतिजगत्याम् (१३)

यस्यां मनजरगा वेदशर रसस्वर निधिरुद्रान्तराणि गुरुणि त्रिभिर्दशभिश्चयतिः सा प्रहर्षिणी नाम ।

यथा—श्रीकृष्णो, व्रजति मनः प्रहर्षिणीं ताम् ॥

(२) यस्यां जभसजगा द्वितुर्यनवैकादशत्रयोदशवर्णा दीर्घा सा रुचिरा नाम । चतुर्भिर्नवभिश्चयतिः ।

यथा—न रोचते खलु रुचिरापि ते सिता" ।

(३) यस्य म त य स गा र साश्वदशैकादशवर्णादीर्घा पूर्वोक्तायति स्तदा मत्तमयूरम् । अत्र सूत्रे यतिश्चिन्त्या ॥

यथा—मेघभ्रान्त्या मत्तमयूरोऽपि ननर्त" ।

( ४ )यस्यां नननसगा अन्त्येद्वेऽक्षरे गुरू सा गौरी

यथा—शिवचरण सरसिजमिति गौरी" ।

असम्बाधा म्तौ न्सौ गाविन्द्रियनवकौ५। अपराजिता नौ र्सौ ल्गौ स्वर ऋषयः।६ प्रहरणकलिता नौ भ्नौ ल्गौ च७। वसन्ततिलकात्भौ जौ गौ८। सिंहोन्नता काश्यपस्य९।

(५) शक्वर्याम् (१४) यस्यां मतनसगगाः षष्ठतःषट् लघवः पंचसु नवसु यतिः साऽसम्बाधा।

यथा "शौरेरुच्छौर्यादवनिरियमसंबाधा"।

[६] यस्यां ननरसलगा सप्तनव द्वादश चतुर्दशवर्णा गुरवः सप्तभिः सप्तभिर्यतिः साऽपराजिता।

यथा "लसति हरिचमूः परैरपराजिता॥

[७] यस्यां ननभनलगाः सप्तमान्त्यौ गुरू चकारात् पूर्वोक्ता यतिः सा प्रहरण कलिता।

यथा—प्रहरण कलिता प्रहरण कलिताम्॥

[८] यस्यां तभजजगगा एकद्वितूर्याष्ट कादशत्रयोदश चतुर्दशवर्णा गुरवः सा वसन्ततिलका। अत्राष्टभिः षड्भिर्यतिरत्याम्नायः।

यथा—सिंहोन्नतत्रिवलिका किल काश्यपस्य प्रोद्धर्षिणी पददर्शा मधुमाधवी या॥ व्याख्या मुदे कवि-जनस्य मनोरमेयं-भूयाद्‌ वसन्ततिलकप्रमुखेन नि-त्यम्॥१॥ [ पत्तेविशेषमाख्यंयस्याः ]।

[९] काश्यपस्य सिंहोन्नता। इयमेव रामस्य मतेन धुमाधवी। अन्ये शोभावतीति नामाहुः।

उद्धर्षिणी सैतवस्य१०। चन्द्रावर्त्ता नौ नौ स्११। मालत्तु नवकौ चेत्१२। मणि-गुणनिकरो वस्वृषयः१३। मालिनी नौम्यौय्

[१०] इयमेव वसन्त तिलका—उद्धर्षिणीति सैतवाचार्यस्य मतेन। आचार्य्यादीनां ग्रहणं पूजार्थम्।

[११] अतिशक्वर्य्याम् (१५) यत्र नगणचतुष्टय सगणश्च अन्त्ये केवलं गुरुः सा चन्द्रावर्ता। यथा—

"मधुरिपुचरण सरसिज नख विधुम्"

इत्युदाहरणम्। अत्र सप्तभिरष्टभिर्यतिः।

[१२] चेत् षष्ठे नवमे च वर्णे यतिस्तदा सैव चन्द्रावर्त्ता—मालेतिनाम्नास्यात्। यथा "मनसि नमति तव चरण कुवलयम्"॥

[१३] चेदष्टभिः सप्तभिर्यतिस्तदा सैव मणिगुण निकर नाम्ना स्यात्। यथा—"यदि भजसि वपुषि मणि-गुणनिकरम्"॥

[१४]यस्यां नन मयया सप्ताष्टनवैकादशद्वादश चतुर्दश पंचदशवर्णा दीर्घा अष्टभि सप्तभि पूर्वोक्ता यतिः सा मालिनी। यथा "विकसित सितपद्मे मानिनी मालिनी सा"॥ अपिच—

गणाकगणगणेयश्रीलगङ्गाप्रसाद-प्रथमतनय पुराय श्लोक, काशीप्रसादात्। अधिगतभवविद्वत्, तात रामेश्वर श्रीचरणशरण राधाकान्तपाण्डेय शर्म्मा॥

ऋषभगजविलसितं भ्रौ नौ नगौ स्वर नवकौ१५। हरिणी न्सौ म्रौ स्लौगृतु समुद्र ऋषयः१६। पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ१७।वंशपत्रपतित भ्रौ न्भौ न्लौ ग् दिगृषयः१८। मन्दाक्रान्ता म् भौ न्तौ त्गौ ग् समुद्र र्तुस्वराः१६।

[१५] अष्टौ(१६) यत्र भर ननगा आद्यतूर्यरसान्त्यवर्णा दीर्घाः सप्तसु नवसु यति स्तत् ऋषभगजविलसितम्।
यथा "जानपदै र्जनैस्त-दृषभग जविलसितम्"

[१६] अत्यष्टौ (१७) यस्यां नसमर सलगाः षष्ठतः पंच ततः द्वादश पुनःपंचदश ततोन्त्योवर्णाः दीर्घः षड्भिश्चतुभिः सप्तभिश्च यतिः सा हरिणी। यथा—
"चकित हरिणी. नेत्र च्छाया, पपौ व्रजभामिनी"

[१७] यस्यां जसजसयलगा नेत्ररस नाग सूर्य मनु तिथि चरमा दीर्घा अष्टभिर्नवभिश्च यतिः सा पृथ्वी। यथा
"निशाचर विनाशनैः स्थितिमती च पृथ्वीकृता।"

[१८] यत्र भर नभ नल गाः चन्द्रवेद रस दश सप्तदश वर्णादीर्घा दशभि सप्तभिश्चयतिस्तत् वंशपत्र पतितम्।
यथा "पश्यति वंशपत्रपतितं हिममिह महिला।"

[१६] यस्यां मभनततगगाः पंचतः पंचद्वादशपंचदशौच

**शिखरिणी य्मौ न्सौ भ्लौ गृतुरुद्राः२०। कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रि-यर्तुस्वराः२१। शार्दूलविक्रीडितं म्सौ**

वर्णा लघव श्चतुर्भिः षड्भिः सप्तभिश्चयतिः सा मन्दाक्रान्ता।

यथा "मन्दाक्रान्ता विकचकमलैर्भाति मन्दा-किनीयम्" ॥

[२०] यस्यां यमनसभलगा द्वितीयतः पंच सूर्यत्रयोदश सप्तदशवर्णा दीर्घा षड्भिरेकादशभिश्चयतिः सा शिखरिणी। यथा "ध्रुवं चेद्वैराग्यं भज सुरनदीस्थां शिखरिणीम्।" अपिच—"क्वचिन्मन्दाक्रान्ता त्वरित गतिरेषा क्वचिदपि, क्वचिद्धंसीश्रेणी भ्रमर लसिता कुत्रचिदपि। क्वचित् पृथ्वी दृष्टा क्वचिदपि चदृष्टा शिखरिणी, समा मन्दाकिन्या भवति कविता केशवकवेः?

[२१] धृतौ [१८] यत्र मतनाः यकार त्रयाश्च, षष्ठतः पञ्च त्रयोदश षोडशवर्णा लघवः, पञ्चभिः षड्भिः सप्तभिश्चयतिः तदा कुसुमित लता वेल्लिता छन्दः। यथा "दूराद् भासन्ते कुसुमितलता, वेल्लिता निष्कुटास्ते"

ज्सौ तौ गादित्य ऋषयः२२। सुवदना म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्त्तवः२३। ग्लिति वृत्तम्२४। स्रग्धरा म्रौ भ्नौ यौ य् त्रिः सप्तकाः२५। भद्रकं भ्रौ न्रौ न्रौ

[२२] अति धृत्याम् [१९] यस्मिन् मसजसत तगाः, चतुः पञ्च-सप्त-नव-दशैकादश-पञ्चदशाष्टादश-वर्णा लघवो द्वादशभिः। सप्तभिश्च यतिस् तच्छार्दूल विक्रीडितम्। यथा "श्रीकृष्णेन तिरस्कृतं नृपरणे. शार्दूल विक्रीडितम्"।

[२३] कृतौ [२०] यस्यां मर भन यभलगा. आद्याश्चत्वारः षष्ठ-सप्तमौ चतुर्दशतस्त्रयोऽन्तिमश्च गुरुः सप्तभिः सप्तभिः षड्भिश्च यतिः सा सुवदना। यथा "आयान्तं काशिकायां कृषति सुवदना गङ्गा प्रथमतः"॥

[२४] यत्र पादेसु ग्लिति गुरु लघुरूपैः कृति प्रकारेण विंशत्यक्षरैर्वृत्त पूतिर्भवति तद् वृत्तं नाम छन्दः। यथा वृत्तमस्य रक्ष विश्वनाथ ढुण्डिराज शारदे शिवाय"। अनिर्देशादत्र पादान्ते यतिः।

[२५] प्रकृतौ ( २१ अक्षर पादाः ) यस्यां मर

नगौ दिगादित्याः२६। अश्वललितं नजौ भजौ भजौ भलौ ग् रुद्रादित्याः२७। मत्ताक्रीडा मौ तनौ नौ नलौ ग् वसुपञ्चदशकौः२८। तन्वी भतौ नसौ भौ नया

भनाः यकार त्रिकाश्च, अर्थात् पञ्चमोऽष्टतः षट् ततः षोडशोन विंशति वर्णौ च लघुः सा स्रग्धरा। अस्यां त्रिवारं सप्तमाक्षरे यतिः। यथा "विघ्नान् विध्वंसयन्ती जयति भगवती स्रग्धरा भद्रकाली।"

[२६] आकृतौ (२२) यत्र भर नर नर नगाः, प्रथम वेद षट् दश द्वादश षोडशाष्टादशद्वाविंशति वर्णा दीर्घा दशभिः द्वादशभिश्चयति स्तद् भद्रकम्। यथा "भद्रक मञ्जुलं शममयं मनीषिवचनं पुनातु सततम्"।

[२७] विकृतौ (२३) यत्र नज भज भज भलगाः, पञ्चम सप्तमैकादश त्रयोदश सप्तदशोन विंशति त्रयोविंशति वर्णा दीर्घा एकादशभिर्द्वादशभिश्च यतिस्तदश्वललितम्। यथा "प्रभवतु भूतये ऽश्व ललितं रमाभवन तोरणं गृहवताम्"।

[२८] यस्यां मम तन ननंन लगा, आदितोऽष्टान्तिमश्च गुरुरष्टभिः पञ्चदशभिश्च यतिः सा मत्ता क्रीडा।

विन्द्रियस्वरमासाः२६ । क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः३० । भुजङ्गविजृम्भितं मौ त्नौ नौ र्सौ ल्गौ वसुरुद्रऋषयः३१ । अपवाहको म्नौ नौ

यथा "मत्ता क्रीडा दृष्टि लक्ष्मी चरण कमल नख विधु किरण लवैः" ।

[२६] संस्कृतौ (२४) यस्यां भत नस भभ नया, इन्दु वेद शर सूर्य त्रयोदश कला वर्णा अन्तिमौ च गुरु पञ्चभिः सप्तभि र्द्वादशभिश्च यतिः सा तन्वी ॥ यथा "निर्मल तन्वी बुधजलसमितौ विश्वपते प्रभवतु मयि बुद्धिः" ॥

[३०] अभिकृतौ (२५) यत्र भम सभ नन न नगा, आद्य तुर्य शर रस निधि दशान्तिमवर्णा दीर्घाः पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिः सा क्रौञ्च-पदा । यथा "क्रौञ्चपदा सा भीषण जिह्वा शिव हृदय कमल धृतनिज चरणा" ॥

[३१] उत्कृतौ (२६) यत्र मम तन नन रस लगा, आदितोष्टोन विंशत्येक विंशति चतुर्विंशति षड् विंशति वर्णाश्च दीर्घा अष्टभि रेकादशभिः सप्तभिश्च यति

नौ न्सौ गौ नवतुरसेन्द्रियाणि३२ । इति कृतयः ॥

दण्डको नौ रः३३ । प्रथमश्चण्डवृष्टि-प्रपातः३४ । अन्यत्र रातमाण्डव्या-

स्तद् भुजङ्ग विजृम्भितम् । यथा "हं हो आस्ते नित्यं रम्यं विष विशद, पशुपतिगले भुजङ्ग विजृम्भितम्" ॥

[३२] यत्र मगणः षण् नगणाः सगौ च तस्मात्-आद्येऽन्ते च त्रयो वर्णा दीर्घा नवभिः षड्भिः षड्भिः पञ्चभिश्च यति स्तदा अपवाहकः । यथा "द्रौपद्यार्त निनदमयभवनवियतिलघुगतिहरिरपवाहोऽभूत्" ।

[३३] षड् विंशत्यक्षराया रुत्कृते रनन्तरं दण्डक जातयो भवन्ति । तत्र नगण द्वयान्ते सप्त रगणा दातव्या । अनिर्देशात् पादान्ते यतिः । यथा क्व नु विलससि दण्डकारण्यवासप्रिये रामसर्वस्वभूते विदेहात्मजे" ॥

[३४] अयं सप्तविंशत्यक्षरात्मकः प्रथमोदण्डकः चण्डवृष्टि प्रपात नामकः । अतः परमेकरगणवृद्ध्या

# भ्याम् ३५। शेषः प्रचित इति३६ । इति दण्डकाः ॥ इति सप्तमोऽध्यायः ।

प्रत्येकं त्रीण्यक्षराणि वर्द्धन्ते । यथा नगणाभ्यां रगणाष्टकेन-अर्णः। एवं-अर्णव-व्याल-जीमूत-लीलाकर-उद्दाम-शंख-आराम-संग्राम-सुराम--वैकुण्ठ—सारकण्ठ सार-कासार-विस्तार-संहार-नीहार-मन्दार-केदार—साधार-सत्कार-संस्कार-माकद--गोविन्द—सानन्द—सन्दोह-नन्द-इत्यादय एकस्त्रिंशदधिक शतकत्रय रगण रचिता, एकोन सहस्रवर्ण पर्यन्तं पञ्चविंशत्यधिक शतत्रय संख्याका दण्डकाः प्रादुर्भवन्ति ॥

[३५] रात-माण्डव्याचार्याभ्यां मतेन चण्डवृष्टि प्रपातनामक प्रथम दण्डकस्यान्यनामेति ॥

[३६] कवीश्वर प्रयुक्त रगण रचित दण्डक व्यतिरिक्ता भगणादिभिर्दण्डका यादृश कृत दण्डका वा शेष शब्देन बोद्धव्या ते प्रचित इति संज्ञां भजन्ते। वृत्तिकार मते रगणेनैव दण्डकाः सर्वे । काशी विश्वेश्वर प्रतिष्ठापकै नारायण भट्टैस्तु "यत्र रेफान् कविः स्वेच्छया पाठ सौभाग्य सापेक्षया रोपयत्येष धीरैः स्मृतो दण्डको मत्तमातङ्ग लीलापरः" "लघु गुरुः क्रमेण यत्र वध्यते सुधीभिरिच्छया सदण्डक

## ॥ अथाष्टमोऽध्यायः ॥

### अत्रानुक्तं गाथा१। कुड्मलदन्ती भृतौ

स्त्वनङ्गशेखरः स्मृतः” “यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धो परो दण्डकः सिंहविक्रान्तनामा” इत्यादि मेघमाला कुसुमास्तरणाद्याः समूचिरे। इति शब्दः सप्तमाध्यान्त सूचकः ॥ शमिति ॥

---

(१) अत्रास्मिञ्छास्त्रेयदनुक्त तत् गाथा नामच्छन्दः। अर्थात् कविभिः प्रयुक्तानां विषमान्तर पादानां षट्पदादीनां समपादानां गौर्यादीनां मात्रा छन्द सां [ दोहा चौपाई सोरठादीनां ] च गाथा पदेन संग्रहः कार्यः। यथा—अस्यामेव मनोरमायां षष्ठाध्यायारम्भे [ सूक्ष्माक्षरेण ] श्री-स्त्री-महीत्यादि छन्दः। तथा—पञ्चमाध्यायान्त सूत्र वृत्तौ ललित पदादि छन्दः शिशुपाल वधादि काव्यप्रयुक्त विस्तृतादि छन्दः प्रस्तार वशादनन्त संख्याकं परिवर्द्धते। तेषु कुड्मलदन्ती त्याद्यष्टादशच्छन्दो ज्ञानार्थं प्रक्षिप्त सूत्राणि लिख्यन्ते नत्वेतानि सूत्रकार कृतीनीति सूत्रोक्तानुक्त पदादेव ज्ञायते।

न्गौ ग् इन्द्रिय रसाः२ । वरतनुर्-न्जौ ज्रौ षड् रसाः३ । जलधरमाला भ्मौ स्मौ समुद्र वसवः४ । गौरी नौ रौ५ । ललना भ्तौ न्सा विन्द्रियर्षयः६। कनकप्रभा स्जौस्जौ ग्७।

(२) त्रिष्टुभीदंवृत्तम् । अत्र भतनगाः पञ्चभिः षड् भिश्चयतिः। यथा "कुड्मलदन्ती निवसतु गेहे"।

(३) जगत्यामिमानि । अत्र नज जराः षड्भिः२ यतिः। यथा "वर तनु मां मुखरीकरोति वाक्"।

(४) अत्र मभ समा श्चतुभिरष्टभिर्यतिः। यथा "रम्यश्रीका जलधर माला काले"।

(५) अत्र ननरराः। यथा "स जयति चरणोऽस्य गौरी पतेः"। [ एकैक रगणवृद्ध्या चतुर्विधानि नामान्तराणीयमेव गौरी भजते । ] सर्वत्रानुक्तस्थले पादान्ते यतिः।

(६) अत्र भतनसाः पञ्चभिः सप्तभिश्च यतिः। यथा "सा मृग नेत्री विहरति ललना"।

(७) अति जगत्यामिमे। अत्र सज सजगाः। यथा "कनक प्रभेव मुखपद्म मण्डलम्"।

कुटिलगतिर् नौ तौ ग् स्वरर्त्तवः८ । वरसुन्दरी भ्जौ स्नौ गौ९ । कुटिला म्भौ न्यौ गौ वेदरस-समुद्राः१० । शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाः११ । वरयुवती भ्रौ य्नौ न्गौ१२ । अतिशायिनी

(८) अत्र नन ततगाः । यथा "कुटिलगति रियं-तारका युग्मके" । यतिश्चात्र सप्तभिः षड्भिः ।

(९) शक्कर्याम् । अत्र भजसनगाः । यथा "याति वर सुन्दरि शशी व्रज विहारम्" ।

(१०) अत्र मभ नयगगा श्चतुर्भिः षड्भिः पुन-श्चतुर्भिर्यतिः । यथा "स्थाने स्थाने कुटिल गमन शीला शेते" ।

(११) अष्टौ । अत्र भर नभ भगाः पञ्चभिः षड्भिः पञ्चभिश्च यतिः । यथा "शैलशिखासु शास्ति यतिराज सुचङ्क्रमणम्" ।

(१२) अत्र भरयन नगाः । यथा "सा युवति र्भवे-न्निशीथे त्वयि वर युवती" ।

मौ ज्भौ ज्गौ ग् दिक् स्वराः१३ ।
अवितथं न्जौ भ्जौ ज्लौ ग्१४ ।
तस्मिन्निन्द्रिय ममुद्राश्चेत् कोकिलकम्१५ ।
विबुधप्रिया र्सौ जौ भ्रौ वसदिशः१६ ।
नाराचकं नौ रौ रौ१७ । विस्मिता य्मौ

(१३) अत्यष्टौ । अत्र ससजभ जगगाः, दशभिः स्वरैश्च यतिः । यथा "मयि भातु कृपाऽतिशायिनी भगवदि ते ऽन्नपूर्णे" ।

(१४) अत्र नजभज जलगाः । यथा "अवितथवाक्य पुनरसनोच्चरति प्रियगाम् ।

(१५) तस्मिन्नेवावितथे ऽष्टभिः पञ्चभि श्चतुर्भिश्च यति श्चेत्तदा कोकिलकम । यथा "अभि मुकुलेष्वयं स परिकूजति कोकिलकः" ।

(१६) धृतौ । अत्र रसजजभरा, अष्टभिर्दशभिश्च यतिः । यथा "मुक्तिमण्डप मण्डिता यदि काशिका विबुध प्रिया" ।

(१७) अत्र नन रर रराः । यथा "दशरथसुतबाहु मुक्तैः स नाराचकैः शक्तिभिः" ।

# न्सौ रौ ग् रसतुस्वराः १८ । शशिवदना न्जौ भ् जौ ज् ञ्रौ रुद्दिशः १६।

(१८) अतिधृतौ । यम नस ररगाः, षड्भिः२ सप्तभिश्च यतिः। यथा "चरन् वाराणस्यां सुरधुनितटे विस्मृतोविस्मृताङ्गः"।

(१६) प्रकृतौ। यत्र नज भज जजरा, एकादशभिर्दशभिश्च यतिः सा शशिवदना [ इयं षडक्षरादन्या ]। पञ्चकावलीति केचित्। धृतश्रीरिति नारायणभट्टः। यथा "शशिवदना समागममहे कवितागत पञ्चकावली"। इति क्षेपक गाथा॥

अथान्यान्यपि कवि प्रयुक्तानि प्रसिद्धानि छन्दांसि श्रुतबोधवृत्तरत्नाकरादौ सन्ति तेषु यत् किञ्चित्-पिङ्गलसूत्र दिशा प्रदर्श्यन्ते, यथा पङ्क्तौ हंसी म्भौ न्गौ १। चम्पकमाला भ्मौ स्गौ वाणशराः २। मनोरमा न्रौ ज्गौ ३। त्रिष्टुपि, यथा—सान्द्रपदं भ्तौ न्गौ ग् ४। सुमुखी न्जौ ज्लौ ग् ५। श्रीः—भ्तौ न्गौ ग् पञ्च रसैः ६। भद्रिका न्नौ र्लौ ग् ७। जगत्याम्, यथा—चन्द्रवर्त्म र्नौ भ्सौ ८। प्रमुदितवदना नौ रौ ६। प्रियंवदा न्भौ ज्रौ १०। मणिमाला त्यौ त्यौ रसरसाः ११। ललिता त्भौ ज्रौ १२। मुक्तिक

दाम ज्जौ ज्जौ १३। पुष्प विचित्रा त्यौ त्यौ १४। विभावरी ज्रौ ज्रौ १५। उज्ज्वला न्नौ भ्रौ १६। अति जगत्याम्, यथा—मञ्जु भाषिणी ज्तौ स्जौ ग् १७। चन्द्रिका न्नौ त्तौ ग् स्वर्तवः १८। शक्वर्याम्, यथा—इन्दुवदना भ्जौ स्नौ गौ १९। लोला म्सौ म्भौ गौ द्विःस्वरा २०। एवं गाथाया मर्द्ध समवृत्त ज्ञानाय वंशस्थेन्द्र वंशयोर्मिश्रणा दुपजाते र्नामानि, यथा—वैरासिकी १। रताख्यानकी २। इन्दुमा ३। पुष्टिदा ४। उपमेया ५। सौरभेयी ६। शीतातुरा ७। वासन्तिका ८। मन्दहासा ९। शिशिरा १०। वैधात्री ११। शंखचूडा १२। रमणी१३। कुमारी १४। यत्र प्रथमः पाद इन्द्रवंशाया अन्ये त्रयोवंशस्थायाः साऽद्या, एवं सर्वा बोद्धव्याः। रूप प्रदर्शन चक्रमुपजातौ स्पष्टम्।

अथास्मिन् गाथा प्रकरणे—

आर्याधिकारे [ हिन्दी भाषायां सुप्रसिद्धानि ] दोहादीनि च्छन्दांसि श्रीराधामाधव विलास काव्यादौ प्रसिद्धानि निर्दिश्यन्ते. तद्यथा—यस्या विषम चरणे त्रयोदश समेचै कादश मात्राः सा दोहा। [ अस्यां विषम चरणादौ जगणोनकार्यः। ] लक्षणं रा० मा० काव्यटिप्पण्याम्। रसवेद त्रिक मित कला, विषम

पदेऽथ समेहि । हरमात्रादलविरतिगं, लघु दोहा सुविधेहि ॥१॥ वैपरीत्यात्तु सोरठा ॥२॥ अत्र द्वितीय चतुर्थयोस्त्रयोदश मात्रास्युरेकादश विषमे । यस्यां प्रतिपादं षोडश मात्राः स्युः,–अन्ते जगणतगणौ न स्यातां सा "चौपाई" ज्ञेया, अस्याः पादाकुलकमिति नामान्तरम्। यत्र विषमे द्वादश मात्राः समे सप्त, तत् वरवै नाम। अस्य ध्रुवकुरङ्गौ नामनी च। यत्र विषमे पञ्चदश, समे त्रयोदश मात्राः स उत्लोलः। अस्यां प्राकृत (हिन्दी)भाषायां दण्डकः कवित्त इति पदेन कथ्यते। तत्सर्वं हिन्दी भाषायाः पिङ्गले स्पष्टम् इत्यलम् ।

(२०) अथ जातिवृत्तात्मकं प्रसिद्धं छन्दोजात मुक्त्वा संप्रति तेषामुत्पत्ति प्रदर्शनाय कविप्रयुक्ताना-मन्येषां ज्ञानाय च प्रस्तारादयः प्रत्ययाः कथ्यन्ते। "प्रतीयते ज्ञायते संख्याविशेषो यैस्ते प्रत्ययाः संख्या विशेषादि बोधका उपाय भेदाः प्रस्तार- प्रभृतयः। तत्र प्रस्तार्यन्ते विस्तार्यन्ते गुरुलघुरूपतया वर्णा अनेनेति प्रस्तारः, गुरुलघु वर्णादि ज्ञानोपाय क्रिया विशेष इत्यर्थः। यथा च मम छन्दश् शिरोमणौ—मात्राया मथवा वर्णे कीदृक् कस्य कियद्द विधम्, स्वरूप मिति विज्ञातुं प्रस्तारः प्रत्ययोऽग्रजः ॥ तस्य प्रस्तारस्य सिद्धये सूत्राण्यु पन्यस्यति" (द्विकौ ग्लाविति) गुरु लघू द्विकौ विन्य-सेत् । उपरि गुरुं (ग) लिखित्वा, तदधो लघुं (ल)

## द्विकौ ग्लौ२० । मिश्रौ च२१ ।

स्थापयेत् । इत्येकाक्षरः प्रस्तारः । अयं प्रदर्शित एकाक्षर प्रस्तारो द्विकोऽतोद्व्यक्षर प्रस्तारे द्विकौ ग्लौ स्थापयेत् ।

(२१) चकारः पूर्व समुच्चयार्थः । तेन द्विकौ ग्लौ स्थापयित्वा मिश्रौ ग्लौ स्थापयेत् अर्थात्—एकाक्षर प्रस्तारं द्विधा स्थापयित्वा प्रथमभागे द्वितीयाक्षर स्थाने गकारं, द्वितीयभागे द्वितीयाक्षर स्थाने लकारं न्यसेत् । तच्च मातृभाषया विशदी क्रियते ।

---

(२०—२१) दो जगह गुरु लघु लिखै, अर्थात् एक अक्षर के प्रस्तार में एक गुरु लिख कर उसके नीचे एक लघु लिखै । यथा—(ऽ।) एक अक्षर के प्रस्तार को दो जगह लिख कर उसके प्रथम भाग के दूसरे अक्षर के स्थान में गुरु२ लिखै, और दूसरे भाग के दूसरे अक्षर के स्थान में लघु२ लिखै । ऐसा करने से दो अक्षर का प्रस्तार सिद्ध होगा, यथा एक अक्षर का प्रस्तार (गल) ऐसा है इसको दो जगह लिखा पहिली जगह (गल) दूसरी जगह (गल) इसमें पहिली जगह गुरु२ की वृद्धि किया तो गग-लग ऐसा हुआ, दूसरी जगह लघु२ की वृद्धि किया तो गल-लल ऐसा हुआ, इनको एक जगह लिखने से दो वर्ण का प्रस्तार गग-लग-गल-लल ऐसा हुआ) ॥

## पृथग् ग्ला मिश्राः२२।

(२२) मिश्रा ग्लाः पृथक् स्थाप्याः। द्वय क्षरप्रस्तारं स्थान द्वये संस्थाप्य प्रथमभागे तृतीयाक्षर स्थाने गुरु गुरु र्दद्यात् द्वितीय भागे तृतीयाक्षर स्थाने लघुलर्घुरिति। पृथगिति पदनिर्देशात् प्रथमावृत्तौ न लकार प्रवेशो न च द्वितीयायां गकारस्येति। एवं त्र्यक्षरादि प्रस्तारं द्विः स्थापयित्वा पूर्वोक्त ग्ला मिश्रण क्रियया चतुक्षरादि प्रस्तारः पूर्वापेक्षया परःपरः सिद्धयति।

---

(२२) दो अक्षरके प्र० को दो जगह रखकर उसके पहिली जगह तीसरे अक्षरके स्थानमें गुरु गुरु लिखै, और दूसरे भाग में तीसरे अक्षर के स्थान में लघु लघु लिखै, यथा दो अक्षरका प्रस्तार (गग–लग-गल–लल) ऐसा है इसको दो स्थान में लिखा पहिली जगह (गग–लग–गल–लल)। दूसरी जगह (गग–लग–गल–लल) इस प्रकार लिखकर गुरु गुरु की वृद्धि किया तो (गगग–लगग–गलग–ललग) ऐसा हुआ। और दूसरी जगह लघु लघु की वृद्धि किया तो (गगल–लगल–गलल-ललल) ऐसा हुआ। इसको एक जगह लिखने से (गगग-लगग-गलग-ललग-गगल-लगल-गलल-ललल) ऐसा तीन अक्षरका प्रस्तार हुआ। इसी प्रकार तीन अक्षरके प्रस्तार को दो जगह लिखकर क्रमसे गुरु लघु की वृद्धि करनेसे

वसत्रस्त्रिकाः२३ ।

(२३) त्र्यक्षर प्रस्तारेऽष्टौ त्रिका जायन्ते । निदर्शनार्थमिदं सूत्रम् ।

---

पाँच अक्षर का प्रस्तार होगा, इसी तरह अन्य भी ६-७-८-६-१०—आदि वर्णों का जानना ।

(२३) तीन अक्षर के प्रस्तार में आठ त्रिक ( तीन२ के जोड़े ) होते हैं ( यही तीन अक्षर का प्रस्तार ८ भेद में जो है वही मगणादि का बोधक है । ) इसी प्रकार चार अक्षर के प्रस्तार में सोलह चतुष्क ( चार२ के जोड़े ) होते हैं । और पाँच अक्षर के प्र० में ३२ ठो पाँच२ के जोड़े होते हैं । ( एक एक वर्ण की वृद्धि से द्विगुणित२ संख्या होती जावेगी ।) यह उदाहरण सूत्र है। इस प्रदर्शित पिङ्गल मुनि कृत प्रस्तार से किसी भी वर्ण के प्रस्तार जाननेके लिये विना पूर्वोक्त सब प्रस्तार सिद्ध किए काम नहीं चल सकता, अतः प्रकारान्तर से भी सिद्ध किया जाता है । (छ० शि०)

आद्यस्याधो गुरोर्न्यस्य लघुं [१] शेषन्तु पूर्ववत् [२]
रिक्ते गुरुस् [३] तथा भूयो [४] यावत् सर्वलघुर्लिखेत्॥

( जितने वर्ण का प्रस्तार जानना हो उतना गुरु का चिन्ह लिखे गुरुके नीचे लघु लिखै [१], और दहिने जैसे

# लर्द्धे२४ । सैके ग्२५ ।

(२४—२५) अक्षर च्छन्दः सु प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्त भेदेषु—इयत्सख्याकभेदः कीदृश इति जिज्ञासायां लघुगुरुसन्निवेश विशेष सामर्थन रूपो-त्तरं "नष्टं" दर्शयति लर्द्धे इति प्रश्नकर्तुः संख्या विशेषेऽर्द्धीकृते सति लघुरेको लभ्यते, तं लिखेत्ततो वशिष्टा संख्या विषमत्वादर्धयितुं न शक्यते तदा सैकेग् । अर्द्ध इत्यनुवर्तनीयम् । विषमायां संख्याया मेकमधिकं निधाय ततो ऽर्द्धयेत् यावदभिमतः प्रस्तारः, तावदिदं लक्षणं पुनपुनरावर्तनीय मिति । यथा—षडक्षरे वृत्ते सप्तमं समवृत्तं कीदृश ?मिति प्रश्ने तस्य सप्तम संख्या विशेषस्य विषमत्वात् (सैकेग् इति) सूत्रानुसारेणैव संयोज्य तस्मिन्नर्द्धीकृते गुरुरेको लभ्यते ततश्चतुः संख्य अवशिष्यते पुनस्तामर्द्धयेत् ततश्चैको लकारो लभ्यते ततो (२) संख्याऽवशिष्यते, ततः षट् संख्या पूरणाय वार त्रयं "सैकेग्" इति सूत्रमावर्तनीयम् ततश्च गकार त्रयं लभ्यते, एवञ्च षडक्षर च्छन्दसि सप्तमं समवृत्तम् ।

---

ऊपर हो वैसाही लिखै [२], और बाम भाग में गुरु लिखै [३], पुनः२ इसी क्रिया को करै, जब तक कि सब लघु न हो जावै ॥ जैसे तीन अक्षर का प्र० ( गगग–लगग–गलग–ललग–गगल–लगल–गलल-ललल ) ऐसा हुआ ।

"गलल-गगग" एतादृशमुत्पन्नम्। एवं संख्यान्तरेष्वपि योज्य मिति दिक्॥

---

## नष्ट

अमुक छन्दका अमुक भेद कैसा होगा इसका उत्तर—

(२४) "लर्द्धे" इस सूत्रसे होगा प्रश्नकर्ता की पूछी हुई संख्या को आधा करै, आधा करके एक लघु लिखै। (जहाँ जहाँ सम संख्या हो वहाँ२ सम संख्या को आधा करके एक लघु लिखता जाय) और जहाँ२ विषम संख्या प्राप्त हो वहाँ तो—

(२५) "सैकेग्" इस सूत्र के अनुसार विषम संख्या में एक जोड़ कर गुरु लिखै, फिर उस संख्याको आधा कर (इसका ध्यान रहे कि सैकेग् से जब विषम संख्या में एक मिलाकर गुरु लिखा जाता है तब आधा करने पर लघु नहीं लिखा जाता है) इस प्रकार जब तक छन्द के अक्षर की संख्या पूरी न हो तब तक लिखता जाय। जैसे किसी ने पूछा कि छः अक्षर के छन्द का १०वाँ भेद कैसा होगा, तो दस संख्या सम है इससे इसको आधा करके एक लघु* लिखा, आधा करने पर (५) बचा है, यह आधा नहीं हो सकता, है इससे इसमें २५वें सूत्र की आज्ञासे १ जोड़ कर एक गुरु* लिखा, पाँचमें १ संख्या जोड़ने पर ६ हुआ, इसको आधा किया तो ३ हुआ, यह आधा नहीं हो सक्ता है, इसमें १ संख्या

जोड़ कर एक गुरु* लिखा तो ३ में १ जोड़नेसे ४ हुआ, इसको आधा किया तो २ हुआ. फिर इस २ को आधा करके एक लघु* लिखा, आधा करनेसे १ हुआ, इसमें एक जोड़ कर १ गुरु* लिखा, फिर आधा किया तो एक हुआ इसमें फिर १ मिलाकर एक गुरु* लिखा तो छ अक्षर का दशवाँ भेद सिद्ध हुआ॥ जहाँ इस प्रकार फूल * है वहाँ का लघु गुरु का वर्ण लिख कर १०वें भेद का रूप देखा तो—

ल ग ग ल ग ग—ऐसा दशवें भेदका रूप हुआ।

## नष्ट का प्रकारान्तर।

जिस वर्ण के प्रस्तार के जिस भेद का रूप जानना हो कल्पित वर्ण के तुल्य लघु रूप (ल) ऐसा लिखकर उसके शिर पर एक दो चार आठ इस प्रकार सब पर द्विगुणित अंक को लिखै फिर अन्त्य के अङ्कको दूना करके उसमें पूछे हुए रूप की संख्या को घटावै जो शेष बचै उसमें लघु रूप के ऊपर का जो जो रूप घटै उसको घटाकर उसके नीचे लघु वर्ण को गुरु कर दें, तो पूंछा हुआ भेद (रूप) निकल आवेगा। किसी ने पूंछा कि ६ वर्ण के प्र० में २६वाँ रूप कैसा होगा, तो (उक्त प्रकार से) इस प्रकार लिखै

## प्रतिलोमगुणं द्विर्लाद्यम् २६ । ततोऽप्येकं जह्यात् २७ ।

(२६—२७) इद्दश गुरुलघु सन्निवेश विशेषवान् भेदः कियत् संख्याक इति प्रश्ने तत्समाधानरूपोत्तर मुदिष्टं प्रतिलोमेत्यादि सूत्रद्वयेनाह, जिज्ञासिता वृत्तसंख्या भूमा

| १ | २ | ४ | ८ | १६ | ३२ |
|---|---|---|---|---|---|
| । | । | । | । | । | । |
| ल | ल | ल | ल | ल | ल |
| | ० | ० | | | ० |
| | ग | ग | | | ग |
| ल | ग | ग | ल | ल | ग |

अन्त में ३२ है इसको दूना किया तो ६४ हुआ अतः पूंछा हुआ २६वाँ भेद है, इससे २६ को ६४ में घटाया तो ३८ बचा, इसमें लघु वर्ण का अंक ३२ को पहिले घटाकर उसके नीचे की लघु मात्रा को गुरु किया, बत्तीस घटाने पर ६ बचा है इसमें ४ को घटा कर उसके नीचे के लघु को गुरु किया, चार घटाने पर शेष २ बचा है इस में २ को घटाकर दो के नीचे के अंक को गुरु किया, इस क्रिया से छः वर्ण का २६वाँ भेद ऐसा—(लगगललग) हुआ, इसी प्रकार और भी जानै ।

स्थापनीया ततस्तस्यान्ते सजातीयापेक्षया यो लकार स्तमादौ कृत्वा प्रातिलोम्येन द्विरावर्त्तयेत्, तत्र निराकाराया आवृत्तेरभावात् प्रथमातिक्रमे कारणाभावादेका संख्या लभ्यते, ततश्चैक संख्याङ्कमन्त्य लकारस्याधस्तात् स्थापयित्वा द्विगुणयेत्, पुनस्तस्मादपनीय तत्पूर्वस्य वर्णस्याधस्तान्निधाय पुन द्विगुणयेत्। पुनस्तदपि तत्पूर्वस्य यावन्ति प्रतिलोम्येन वृत्ताक्षराणि समाप्यन्ते, तत्र याः संख्या स्तावतिथं तद्वृत्त मिति। तत्र विशेषं वक्ष्यति। उपर्य्युक्ते कार्ये क्रियमाणे सा संख्या गुरु स्थानगा चेत्तदा तां द्विगुणयित्वा ततः संख्या समुच्चया देकं त्यक्त्वा कार्यं कुर्यात्। ततः पूर्णत्वात् तद्द संख्या सिद्ध्यति। यथा—कुमार ललिता वृत्तं कतमो

---

उद्दिष्ट।

यदि किसी छन्द के किसी भेद को लिख कर पूछै कि यह कौन भेद है।

(२६-२७) तब उस भेद में लघु वर्ण जहाँ अपने सजातीय के अपेक्षा से अन्त्य में देख पड़े उसके नीचे एक लिखकर फिर प्रतिलोम (उलटा) दूना दूना जो कुछ गुरु लघु वर्ण हो उनके नीचे लिखता जाय, परन्तु जहाँ जहाँ गुरु वर्ण के नीचे अंक प्राप्त हो वहाँ वहाँ के अंक को दूना करके उसमें फिर "२७ ततोह्येकं जह्यात्"

भेद इति प्रश्ने सतितदुक्त लघु गुरु रूपवर्णचिन्हानि भूमौ स्थापयेत् । तत्र च प्रथमापेक्षया पञ्चम स्थान स्थितो यो लकारः स एवान्त्य लकारः, तदनन्तरं लकारस्याभावात् । एवञ्च तस्य लकारस्याधस्तादेकाक्षरं स्थापयित्वा द्विगुणयेत् ततस्तं द्विगुणितं (२) अङ्कं तत्पूर्व लघोः ( चतुर्थाक्षरस्य ) अधस्तात्स्थापयित्वा द्विगुणयेत्

---

इस सूत्रके अनुसार १ घटाकर बाँयें तरफ के वर्ण के नीचे लिखै, सब वर्णों के नीचे इस प्रकार दूना दूना अंक लिखकर अन्त के अंक के नीचे का जो अंक है उसको दूना करने से जो संख्या हो वही संख्या वाला भेद जानै। जैसे किसी ने षडक्षर गायत्री का यह भेद ( ल–ग–ग–ल–ग–ग ) लिखकर पूछा यह कौन भेद है तो इस भेद के देखने से मालूम हुआ कि पहिला वर्ण और चौथा, लघु वर्ण हैं सजातीय के अपेक्षा चौथा वर्ण अन्त में है, इस चौथे वर्ण के नीचे १ लिखा और इस एक को दूना करके इसके पूर्व गुरु। (तृतीत वर्ण) के नीचे दो की संख्या लिखा, फिर इसको दूना किया तो ४ हुआ इसमें एक × घटाया तो ३ हुआ इसको उसके

---

× गुरु वर्ण के नीचे का अंक जहाँ जहाँ दूना किया जायगा वहाँ वहाँ उसमें से एक एक घटा कर उसके वाम भाग में लिखा जायगा।

ततस्तमपि द्विगुणितं (४) अक्षरं तत्पूर्वलघोरभावात् स्थापयित्वा पुन र्द्विगुणयेत्, ततस्तमपि द्विगुणितं (८) अक्षरं तत्पूर्वं गुरोरधस्तात् स्थापयित्वा द्विगुणीकृत्य ततः एकं जह्यात् तत स्तमङ्कं (१५) तत्पूर्वलघोः प्रथमाक्षरस्याधस्तात् स्थापयित्वा द्विगुणयेत् ततश्च त्रिंशत् संख्या लभ्यते । इत्थं सप्ताक्षरे छन्दसि त्रिंशत्तमो भेदः कुमारललितेति । एवमन्यत्राप्यूह्यम् ॥

---

पूर्व ( दूसरे ) वर्ण के नीचे लिखा, फिर इस (३) को दूना किया तो (६) हुआ इसमें भी (१) घटाया तो (५) हुआ इसको उसके पूर्व लघु (प्रथम) वर्ण के नीचे लिखकर, प्रथम वर्ण के नीचे स्थित ५ को दूना किया तो १० हुआ इससे विदित हुआ कि छः अक्षर के छन्द का यह दशवाँ भेद है ।

प्रकारान्तर से उद्दिष्ट (२६—२७ सूत्रोक्त विचार ।)

जितने वर्ण का प्रस्तार भेद पूछा हो उस पूछे हुए भेद के शिर पर १, २, ४, ८, इत्यादि दूने२ अंक लिखै फिर लघु वर्ण पर जो जो अंक हो उनको जोड़कर उसमें १ और मिलाने से भेद मालूम होगा । किसी ने षडक्षर गायत्री का यह भेद लिखकर ल-ग-ग-ल-ग-ग

१ २ ४ ८ १६ ३२

पूछा कि यह कौन भेद है तो इस भेद ल-ग-ग-ल-ग-ग

## द्विरर्द्धे२८ । रूपे शून्यम्२९ । द्विः शून्ये३० ।

(२८—२९—३०) प्रस्तार मन्तरा वृत्तसंख्या परिज्ञानं दर्शयति, द्विरर्द्ध-अमुकच्छन्दसि कति वृत्तानि भवन्तीति जिज्ञासायां तच्छन्दोत्तर संख्यां भूमौ निधाय ततोर्द्धमनयेत् ततो यत्लभ्यते तां पृथक् प्रस्तारयेत् । यथा षडक्षरच्छन्दसि षट् संख्यां भूमौ स्थापयित्वार्द्धी कृते द्वौ लभ्येते (यस्याः कस्याश्चिदपि सम सङ्ख्याया अर्द्धापयन एव द्विसङ्ख्या लाभत्वात् ।) तां पृथक् प्रस्तारयेत् शेषास्त्रयोत्तर संख्यायां भवन्ति तेषांमर्द्धयितु मशक्यत्वा त्किं कार्य्य मत आह रूपे शून्यम् विषम सङ्ख्यातो रूपमेक सङ्ख्याङ्कं वियोजयेत् तत श्शून्यं लभ्यते, तत् प्रथम लब्धाया द्विसङ्ख्याया अधस्तात्स्थापयित्वा वशिष्टायां द्विसङ्ख्यायामर्द्धेपनीते पुनर्लब्धां तां द्विसङ्ख्यां शून्यस्याधः स्थापयेत् ततो रूपे शून्यं लभ्यते (यस्याःकस्याश्चिदपि विषम सङ्ख्यया रूपापनयन एव शून्य लाभत्वात् ) तत् द्विसङ्ख्याया अधस्तात् स्थापयेत्

---

के ऊपर एक दो चार इत्यादि दनादना अंक लिखा, देखा तो मालूम हुआ कि पहिला चौथा लघु वर्ण है इसके ऊपर १ । ८ है इसको जोड़ा तो ९ हुआ इसमें १ और मिला दिया तो (१०) हुआ अतः विदित हुआ कि यह छः वर्ण के छन्द का दशवाँ भेद है ।

ततः किं कार्यं मत आह "द्विः शून्ये" शून्यस्थाने स्थितस्याङ्कस्य द्विरावृत्तिं कुर्यात् ततश्शून्याया आवृत्तेरभावात् प्रथमाति क्रमे कारणाभावाल् लभ्यत एका संख्यैव, तामधः शून्य-स्थाने स्थापयित्वा द्विगुणयेत्, तदा द्वौ भवतः, तस्यो परिष्टादर्द्ध स्थानस्थितं द्वि सङ्ख्याङ्कं तदपनीय, तस्य स्थाने तं शून्य स्थान स्थितं द्विगुणितं ( द्विसंख्यात्मक रूपमङ्कं ) स्थापयेत्, अतः परं किं कार्यम्।

---

संख्या ४ प्रत्यय।

(२८-२९) अमुक छन्दमें कै ठो वृत्त होंगे ? इस प्रश्नका उत्तर देने का प्रकार यह है कि—जै अक्षर का छन्द हो उसको आधा करै आधा करने पर (२) लिखै, फिर उस शेष संख्या को आधा करता जाय और दो लिखता जाय और जहाँ२ विषम संख्या मिलै, वहाँ आधा नहीं हो सक्ता है अतएव वहाँ (२९)वें सूत्र के अनुसार उसमें ( विषम संख्या ) में से १ घटाय कर शून्य लिखै अतः जहाँ२ विषम संख्या मिलै वहाँ२ एक घटा कर शून्य लिखता जाय, और आधा करके दो (२) लिखै जब तक वृताक्षर पूरा न हो तब तक यह क्रिया बराबर करैं।

जैसे छः अक्षर के छन्द की संख्या जानना हो तो छः को (२८) वें सूत्रकी आज्ञानुसार आधा करके एक जगह दो लिखै फिर आधा करने पर जो (३) बचा है, वह

## तावदर्द्धं तद्गुणितम्३१ ।

(३१) अर्द्ध स्थाने स्थितमङ्कं तत् तावद् गुणितं तस्योपरि शून्य स्थाने तमङ्कं स्थापयेत् ततो द्विशून्य

---

आधा नहीं हो सक्ता है इससे उसमें (२६) सूत्र के कथनानुसार १ घटा कर जिस जगह दो लिखा है उसी के नीचे शून्य लिखा और तीनमें (१) घटानेसे २ बचा इस को आधा करके शून्य के नीचे दो लिखा, और दो को आधा करने पर जो एक बचा है उसमें (२६) सूत्र के अनुसार १ घटा कर दो के नीचे शून्य लिखा—

यथा २ । ० । २ । ० ।

(३०) जहाँ२ शून्य का स्थान हो द्विरावृत्ति (दूना) करै, जहाँ अंकों के घटाने पर एक रह जाता है वहाँ एक संख्या में एक संख्या को घटा कर शून्य लिख देने पर भी एक संख्या विद्यमान रहती है. अतः उस १ को नीचे के शून्य * स्थान में स्थापित करके दूना करे तब दो होगा, इस दो को इसके ऊपर अर्द्ध स्थान में जो दो (२) है उसको घटा कर लिखै ।

---

* जहाँ २ अंकों के आधा करने पर दो लिखा है वहाँ अर्द्ध स्थान * जहाँ२ एक घटाकर शन्य लिखा है वहाँ शून्य स्थान जानै ।

इति द्विगुणिता-अष्टौ भवन्ति, तानप्यर्द्धं स्थाने निधाय तावद् गुणान् कुर्यात् ततो ऽष्टावष्टाभिर्गुणिता चतुःषष्ठि र्भवन्ति गायत्री समवृत्तानि। एवं प्रकारेणाष्टाविंशत्यधिक-शतमुष्णिहः, षट् पञ्चाशदधिके द्वे शतेऽनुष्टुभः, द्वादशो-त्तराणि पञ्चशतानि वृहत्याः, चतुर्विंशत्यधिकं सहस्रं पङ्क्तेः, अष्टचत्वारिंशदधिके सहस्रे त्रिष्टुभः, षण्णव-

---

(३१) जो अर्ध स्थान में स्थित संख्या जायमान हो उसको उसी संख्या से गुणै तब (२) को (२) से गुणनेसे (४) होगा इसको इसके ऊपर जो शून्य स्थान है वहाँ लिखै फिर ३० सूत्र के अनुसार शून्य स्थान में स्थित (४) को २ से गुणै ऐसा करने पर ८ हुआ, इसको इसके ऊपर जो अर्ध स्थान है वहाँ लिखै फिर इस (८) को इसी संख्या (८) से गुणा तो गायत्रीका समवृत्त (६४) हुआ इसी प्रकार से—

| | |
|---|---|
| उष्णिक् का समवृत्त— | १२८ |
| अनुष्टुप् का— | २५६ |
| वृहती का— | ५७२ |
| पंक्ति का— | १०२४ |
| त्रिष्टुप् का— | २०४८ |
| जगती का— | ४०९६ |

होता है ऐसेही आगे भी एक२ अक्षर के वृद्धि से द्विगुणितवृत्त संख्या बढ़ती जायगी।

# द्विर्द्व्यूनं तदन्तानाम् ३२ ।

त्र्यधिकानि चत्वारि सहस्राणि जगत्या, एव मति जगत्यादीनामपि ज्ञातव्य मिति।

(३२) एकाक्षरादि-इयदक्षर पर्यन्त च्छन्दसां योगे कियती समवृत्त सङ्ख्या भवतीति प्रश्ने "द्विर्द्व्यून" मिति। गायत्र्यादि समवृत्ता सङ्ख्या समुदायं द्विगुणी कृत्य द्वाभ्यां हीनं कार्यम्। तत एव तदन्त च्छन्दसां परिमाणं लभ्यते, यथा षडक्षर वृत्तस्य समवृत्त संख्या

---

साधन प्रकार।

| | | | | | | |
|---|---|---|---|---|---|---|
| अर्द्ध स्थान | २ | ८ | ÷ | ८ | = | ६४ |
| शून्य स्थान | ० | ४ | + | २ | = | ८ |
| अर्द्ध स्थान | २ | २ | + | २ | = | ४ |
| शून्य स्थान | ० | १ | + | २ | = | २ |
| एक अक्षर का | | | २ | | भेद | |

(३२) गायत्री आदि समवृत्तों की जो संख्या हो उसको दूना करके उसमें २ घटाने से उस छन्द का और इसके पूर्व एकाक्षरादि समवृत्तों की संख्या होती है॥

यथा—छः अक्षर की गायत्री का समवृत्त संख्या (६४) है इसको दूना किया तो (१२८) हुआ इसमें (२)

# परेण पूर्णम् ३३ । परे पूर्णमिति ३४ ।

## इति अष्टमोऽध्यायः ।

( ६४ × २ = १२८ − २ = १२६ ) चतुष्षष्टि द्विगुणिताऽष्टा-विंशत्यधिकं शतं भवति. तस्मिन् द्वाभ्यामूने षड् विंश-त्यधिकं शतमेकाक्षर प्रभृति षडक्षर पर्यन्त छन्दसां समवृत्त संख्या समष्टिस्समुत्पद्यते. एवमन्यत्रापि बुधिभिर्विभाव्यम् ।

(३३) उष्णिहादीनां समवृत्त संख्या कियतीति प्रश्ने परेणेति दर्शयति । तत्पूर्ववर्ति षडक्षर गायत्री छन्दसः समवृत्त संख्या जातं द्विगुणितं पूर्वमेव निवेश-नीयं न न्यूनम् । परे छन्दसि जिज्ञासिते तत्संख्या

---

घटाया तो (१२६) यह एक अक्षर से लेकर छः अक्षर पर्यन्त छन्दों की समवृत्त संख्या हुई ।

### संख्या का प्रकारान्तर ।

एक अक्षर के छन्द का दो भेद होता है, दो का ४ तीन का ८ इत्यादि प्रकार से द्विगुणित अंक बराबर जितने वर्ण की संख्या जानना हो वहाँ तक लिखना जाय तो उक्त वर्ण की सङ्ख्या विदित हो जायगी ।

| वर्ण | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|
| संख्या | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ |

जातं तद् द्विगुणितं परस्य च्छन्दसो वृत्तानां संख्या जायते। यथा षडक्षर गायत्री समवृत्त संख्या चतुष्षष्टि द्विगुणिता सत्यष्टाविंशत्यधिकशतं परस्योष्णिहः सम वृत्त संख्या प्रादुर्भवति ॥

(३४) अथ एक-द्व्यादि लघुक्रियानिष्पत्तये मेरु दर्शयति पर इति। परेकोष्ठे यद् वृत्त संख्या जातं प्रथमे कोष्ठे व्यवस्थाप्यैकां संख्यां पूर्व कोष्ठयोः पूर्णं स्थापयेत्

(३३) उसके आगे के छन्द के जानने की जिज्ञसा हो तो पूर्व की सङ्ख्या जो हो उसको दूना करके पूर्ण स्थापित करै ( उसमें दोन घटावै ) तब उसके आगे की वृत्त सङ्ख्या होगी।

जैसे—गायत्री का समवृत्त सङ्ख्या ६४ है इसको दूना किया तो १२८ हुआ यह गायत्री के पर (आगेके) छुन्द उष्णिक् का समवृत्त सङ्ख्या हुई।

(३४) यह सूत्र एक द्वयादि लग क्रिया के सिद्धि के लिये ऊपर एक कोष्ठ चौकोना लिखै उसके नीचे दोनो तरफ आधा निकला हुआ दो कोष्ठ लिखै नीचे ३ उसके नीचे ४ जै वर्ण की मेरु की इच्छा हो तहाँ तक लिखता जाय, इन कोष्ठों में अङ्क रखने का प्रकार यह है कि ऊपर के कोष्ठ में १ लिखै उसके नीचे के कोष्ठ में जो वृत्त संख्या है उसको पूरा लिखै, अर्थात् दोनों कोष्ठों में एक २ लिखै. तीसरी पंक्ति में आदि अंत्य के कोष्ठ

तत्रोभयोः कोष्ठयोरेकैक मङ्कं योजयेत् । ततः तृतीयायां पंक्तौ पर्यन्त कोष्ठयोः पर कोष्ठगतमेकैक मङ्कं दद्यात्। मध्ये कोष्ठे तु पर कोष्ठ द्वयाङ्कमेकीकृत्य पूर्णमेव स्थापये दिति पूर्ण शब्दार्थः तत्राद्वि कोष्ठायां पङ्क्ता वेकाक्षरस्य प्रस्तारः । तत्रेकं सर्व गुरु-एकं सर्व लघु वृत्तं वर्तते। तृतीयायां (२)क्षरस्य प्रस्तारः। एवं यावदभिमतं मेरु

---

ऊपर से एक२ की संख्या लिखै, और मध्यय के कोष्ठमें ऊपर के दोनों कोष्ठों की सङ्ख्या जोड़ कर पूर्ण २ लिखै, ( यह सूत्रोक्त पूर्ण शब्द का अर्थ है कि ऊपर को संख्या से पूर्ण करै ) चौथी पंक्ति में भी आदि अंत्य के कोष्ठ में एक २ लिखै और मध्य कोष्ठों में दो कोषठों की संख्या जोड़ कर पूर्ण (३) लिखै इसके आगे पञ्च-मादि पंक्तियों में भी इसी प्रकार न्यास करै, अर्थात्-आदि अंत्य के कोष्ठों में एक२ लिखै और मध्य के कोष्ठों में ऊपर के कोष्ठों का जोड़ लिखै ।

१

एक अक्षर का प्रस्तार १ । १ । २
दो १ । २ । १ । ४
तीन १ । ३ । ३ । १ । ८
चार १ । ४ । ६ । ४ । १ । १६
पाँच १ । ५ । १० । १० । ५ । १ । ३२

प्रस्तारं प्रथम प्रस्तार वल्लिखेत् । मेरु यन्त्राकारत्वादयं मेरु रिति कथ्यते ।

## अथोप संहारे ।

छन्दः सूत्राणां वर्गवन्धनाय प्राचीना पंक्ति लिख्यते । "मय द्वादश" । धीः पञ्चदश । पादः परोष्णिक् प्रस्तार पंक्ति विंशति विशति रेक विंशतिः । देवता दितो ऽष्टौ । चतुः शतं षष्ठो (ऽत्र लौकिक माद्यर्द्ध समा) विंशति विंशतिः । सुगपरान्तिका त्रयोदश । वृत्तं गाथादौ विंशति विंशतिः । यवमती त्रीणि । यति विंशतिः । वातोर्मी मष्टादश । प्रहर्षिणी विंशतिः । शार्दूल विक्रीडितं पञ्चदश । अत्रानुक्त सप्तदश इति ॥ (सूत्रेन्यूनाधिका तु प्रक्षिप्त तिरोभावतया वधारणीयेति समाप्तम् ॥ अस्या व्याख्या भूमिकायां द्रष्टव्या)

---

जहाँ दूसरी पंक्ति में एक अक्षर का प्रस्तार है वहाँ एक गुरु, एक लघु होता है, तीसरी पंक्ति में दो अक्षर का प्रस्तार है वहाँ १ सर्व गुरु का, २ एक लघु, और एक सर्व लघु का वृत्त है । चौथी पंक्ति में ३ अक्षरका प्रस्तार है, वहाँ १ सर्व गुरु का, ३ एक लघु का, ३ दो लघु का, १ सर्व लघु का वृत्त है इसी प्रकार से पंच-मादि पंक्ति में भी सर्व गुर्वादि सर्व लघ्वन्त और (१ २ ३) आदि लघु देख परेंगे ।

अनया पंक्त्या ज्ञायते सूत्रकार कृतमन्तिमम् तत् सप्तदश सूत्र मध्येति षष्ठ प्रत्यय बोधकं मृत सञ्जीविनी निर्माणा-त्पूर्वं दृगोचर मासीत्। अन्यथा (कुड्मल दन्तीत्यादि १८ सूत्रातिरिक्त ) अष्टमाध्याये षोडशैव सूत्राणि भवन्ति। अस्य प्रत्ययस्य रीत्यैव गरुडमवञ्चयत्पिङ्गल नागः। अत एव केदार कविः पुरुरेच्छानु विधायित्वेनानियतत्वादपि च्छन्दाचार्य शास्त्र गौरवात्प्रोवाच निजवृत्तरत्नाकरे, यथा—

"संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः।

वृत्तः स्याङ्गुलिकी व्याप्ति मधः कुर्या दथाङ्गुलीम् ॥

इति षष्ठ प्रत्यय स्मृतिः समाप्ता। अथाचार्येण मात्रा प्रस्तार

---

अध्वा।

संख्या को दूना करके एक घटानेसे अध्वा होता है। जैसे-तीन वर्ण की वृत्त संख्या (८) है इसको दूना किया तो १६ हुआ इसमें १ घटाया तो (१५) अध्वा का अंक मिला, तीन अक्षर का प्रस्तार १५ अंगुल भूमि में लिख परन्तु यह शेषजीके फणसे लिखा गया तो पंद्रह अंगुल अध्वा (मार्ग) को प्रस्तार छें का होगा, (गरुड भगवान से दूर होने के लिये) हम तो तीन अक्षर का प्रस्तार नीचे लिखते हैं देखकर आप विचार कर ले की इसका अध्वा क्या है।

गगग–लगग–गलग–ललग–गगल–लगल–गलल–ललल।

परित्यागादनु... द्वारा तदानीं काले जाति रचनाया अल्प विस्तारत्वान्मात्रा प्रस्तारादि प्रत्ययो नोक्तः ( स मातृभाषायाद्यः प्रदर्श्यते ) इति शम् ।

विश्वनाथ स्वरूपश्री१०८मनीष्यानन्द योगिने ।
इयं मनोरमा वृत्तिः प्रमोदाय समर्प्यते ॥

---

मात्रा प्रस्तार आदि में वर्ण प्रस्तार आदि से कुछ विशेषता है। मात्रा प्रस्तार यदि सम मात्रा ( अर्थात् २-४-६-८ ) का हो तो सबके पूर्व मात्रा के अनुकूल गुरु लिखै ( दो मात्रा का एक गुरु होता है ) और जब विषम ( १-३-५-७-९ ) आदि का बताना हो तो पहिले एक मात्रा वाली एक लघु रेखा देकर तब गुरु लिखै । जैसे— पाँच के बनाने में प्रथम (लगग) ऐसा लिखै ।

वर्ण प्रस्तार के समान यहाँ भी आदि गुरु के नीचे लघु लिखै शेष जैसा ऊपर हो वैसाही लिखै, और उबरी मात्रा को वाम भाग में लिखै, यहाँ पर यह ध्यान रहै कि यदि उबरी हुई मात्रा विषम हो सबके वाम भाग में लघु रहैगा और उसके दहिने भागमें दो२ मात्रा का एक २ गुरु रहैगा । जैसे छः अक्षर के मात्रा का प्रस्तार ऐसा हुआ ।

गगग—ललगग—लगलग—गललग-लललग-लगगल गलगल—लललगल—गगलल — ललगलल— लगललल— गललल—ललललल

इति श्रीपिङ्गलसूत्रस्य मनोरमा वृत्तिः समाप्ता । ॐ ॥